# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकौ


डॉ. राजारामशुक्लः
निदेशकः, अनुसन्धानसंस्थानस्य

डॉ. हरिश्चन्द्रमणित्रिपाठी
निदेशकः, प्रकाशनसंस्थानस्य






५६ वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून - सितम्बर, २००१ ई.




*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*

**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००१

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# सम्पादकीयम्

सारस्वत्याः सुषमाया नैकविधानुसन्धानप्रबन्धसन्दोहसमेधमानवैभवायाः षट्पञ्चाशत्तमवर्षस्य प्रथमद्वितीयाङ्कौ सुधियां करकमलेषूपायनीकुर्वन्तो नितान्तं सन्तोषमनुभवामो यत् केनापि प्रकाशमनिर्वाच्येन हेतुना मनागिव मन्दतां गताऽप्यस्या गतिः समेषां विदुषामाशिषा सर्वविधसहयोगेन चेदानीं पुरातनगौरवशिखरमारुरुक्षन्ती समेधत इति नास्ति स्यात्तिरोहितं नियमतोऽस्या अनुशीलनतत्पराणां सुधीवराणाम्। नचिरेणैषा पत्रिका यथाकाल-प्रकाश्यतामासादयिष्यतीत्येष विषयः सत्यं कमपि सन्तोषविशेषं सन्तन्तनीति नः स्वान्ते। अस्माकं साग्रहाभ्यर्थनां सानुग्रहमङ्गीकृत्य विविधाभिः स्वीयाभिः कृतिभिरनेके विद्वांसोऽस्मानुपाकुर्वन्, इतरे चोपकर्तुं समीहमानास्तदर्थं प्रयतमानाश्चास्माभिरज्ञायन्त। प्रस्तुतञ्चेदमङ्कयुगलमपि नानाशास्त्रविचक्षणानां वैचक्षण्यप्रतिबिम्बभूतं समुद्भासते।

**'संस्कृतकवितायां भारतीयस्वातन्त्र्यसमरस्य चित्रणम्'** इत्याख्ये प्रथमे निबन्धे विश्वविद्यालयस्यास्य कुलपतयो मान्या **अभिराजराजेन्द्रमिश्रमहाभागा** न केवलं स्वातन्त्र्यसमरसम्बन्धिनीः संस्कृतकृतीर्देशकालानुकीर्तनपुरःसरं सम्यग् विवृतवन्तः; अपि तु स्थाने स्थाने प्रसङ्गानुरूपं संस्कृतविद्यासम्बन्धिसंशोधनेष्वात्मानं व्यापारयतोऽपि विद्याया अस्या अर्वाचीनत्वप्रतिपादनमिषेण वस्तुत एतद्विरोधिनो वैदेशिकानिव भारतीयानपि विद्वदाभासान् भृशं गर्हितवन्तः। तेनायं लेख एकतोऽनुसन्धित्सुवर्गं महदुपकरोति, अपरतश्च भारताभिमानमपि रचयितुर्ज्ञापयति।

पूर्वोत्तरमीमांसयोः पृथक् प्रस्थानत्वमेकप्रस्थानत्वं वेति सविचारपरीक्षणपरो द्वितीयोऽत्र लेखः **आचार्यश्रीपारसनाथद्विवेदिवर्याणां** नैसर्गिकीं विचारणक्षमतां प्रकटयति। द्वैताद्वैतवादत्वेन प्रथिमानं गतो निम्बार्काचार्याणां सिद्धान्तो नास्त्यपरिचितो दार्शनिकेषु। तस्यास्य सिद्धान्तस्य साररूपेण **डॉ. आदित्यनाथभट्टाचार्यै**र्निबद्धो लेखो दार्शनिकसिद्धान्तपरिचयप्रक्रमेऽस्माकं लक्ष्यं साधयति। तद्वदेवान्योऽपि जैनदर्शनपर्यालोचनपरो **डॉ. हरिप्रसाद-अधिकारि**महाभागानां लेखोऽपि भृशं स्तुतिमर्हति, यत्र तैर्न केवलमस्य दर्शनस्यैतिहासिको दार्शनिको वा परिचयः प्रस्तुतः; किन्तु यथावसरं तत्र तत्र स्थले गम्भीरं विचारितमपि। तदिमामेतादृशीं लेखपरम्परामग्रेऽपि चालयितुमस्माभिः

प्रार्थितास्ते ओमित्यङ्गचकार्षुः। पूर्वमीमांसादर्शनस्य प्रमाणविषयिणीं चर्चां प्रस्तुवन्ति **डॉ. कपिलदेवपाण्डेय**महाभागाः स्वीयनिबन्धमाध्यमेन। प्रत्यक्षादीनां प्रमाणानां स्वरूपविवेचनपुरःसरं प्रामाण्यस्य नैयायिकाभिमतपरतस्त्वनिराकरणद्वारा मीमांसाशास्त्राभिमतस्वतस्त्वं यथाशास्त्रमत्र प्रतिपादितमाचार्यैः। प्रसङ्गेन चाप्रामाण्यमपि विवेचितमित्ययं लेख एतच्छास्त्रेऽनुसन्धित्सूनामत्यन्तमुपकारकः। एवमेव **'भवभूतिनाट्यसाहित्ये गुम्फिता पर्यावरणचेतना'** तथा **'भारविविशाखदत्तयो राजनीतिकदृष्टिः'** इत्यमू लेखावत्यन्तं नूतनामेव, अधुनायुगेऽत्यन्तमपेक्षितामेव च सरणिमाविष्कुरुत इत्यवश्यमनुशीलनीयौ सुधीभिः। अन्ते नैकेषामालङ्कारिकाणामाचार्याणां पक्षान् समीक्षमाणेन श्रीमता **बृजेशमणिपाण्डेय**महाभागेन ध्वनिसिद्धान्तो यथाशास्त्रं समर्थित इत्ययमपि लेखः स्तुतिमर्हति।

प्रायशो यथाशक्ति प्रत्यङ्कं कमपि लघुग्रन्थं प्रकाशमानेतुं प्रयतमाना अस्मिन् अङ्कयुगले **श्रीविश्वेश्वरपाण्डेय**विरचितां विदुषा **डॉ. हरिवंशकुमारपाण्डेय-**महाभागेन सुसमीक्ष्य सम्पादिताञ्च **'रसचन्द्रिकां'** विद्वद्भ्यः समर्पयामः। तदेवं तत्रभवद्भ्यः समर्पितमिदमङ्कयुगलमवश्यमेव तत्रभवतां मुदं जनयिष्यतीति विश्वसिमः।

एवमेवाग्रेऽपि सारस्वत्याः सुषमाया अलङ्करणार्थं निबन्धसम्प्रेषणेन, समीक्षासम्प्रेषणेन, समीक्षार्थं ग्रन्थसम्प्रेषणेन चास्मानुत्साहयिष्यन्ति सुधीवरा इत्यावेदयितुमिच्छामि—

**राजारामशुक्लः**
**निदेशकः**
अनुसन्धान-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

**वाराणस्याम्**
गुरुपूर्णिमायाम्,
वि.सं. २०५९

# विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५६ वर्षे | ज्येष्ठ-भाद्रपद-पूर्णिमे, वि.सं. २०५८ | १-२ अङ्कौ |
|---|---|---|

# संस्कृतकवितायां भारतीयस्वातन्त्र्यसमरस्य चित्रणम्

**मिश्रोऽभिराजराजेन्द्रः**

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयः

वाराणसी (उ.प्र.)

***

आवेदेभ्योऽभिजातसंस्कृतवाङ्मयं यावत् सर्वत्राऽपि स्वातन्त्र्यभावनायाः प्रतिपादनं पृथक्प्रसङ्गेषु समवलोक्यते। सर्वं परवशं दुःखं सर्वमात्मवशं सुखमिति समुद्घोषयद्भिः संस्कृतमनीषिभिरङ्गीकृतं यज्जीवितरसायनभूतं तत्त्वं स्वातन्त्र्यमेव। स्वकीयं तन्त्रमिति स्वतन्त्रम्। तस्य भावः स्वातन्त्र्यम्। स्वकीये तन्त्रे मानवः सर्वविधं सौख्यं भजते। स्वेच्छाऽनुरूपमसावाचरति; परन्तु परतन्त्रेऽवस्थिते सत्यसौ परकीयेच्छाऽनुरूपं समाचरितुं प्रभवति। तस्य शरीरं मनः किं वाऽऽत्माऽपि, चैतन्यमपि पराधीनं जायते। हन्त! किमतः परं दारुणं दुःखम्?

य खलु कीरः स्वतन्त्रः सन् स्वमित्रमण्डल्या सार्धमनन्तगगनविहरणसुखं स्वायत्तीकुर्वन् स्वर्गोपमसौख्यं भजते, स एव कनकपञ्जराबद्धः सन् दासदासीभिः सप्रणयं विविधस्वादुफलादिभिर्भोजितोऽपि न क्षणमपि प्रसन्नतामनुभवति। पञ्जराद् बहिर्विहायसि समुत्पततो वयस्यान् दर्शं दर्शमसावपि सङ्कीर्णपञ्जरपुटे पक्षतिद्वयमसकृद् धुनोति, पारवश्यमनुभूय च स्थूलस्थूलं श्वसन् करुणकरुणञ्च क्रन्दन् श्लथस्तिष्ठति। हा दैव! को नु वेत्ति तस्य विहरणप्रकृतेर्जीवस्य पारवश्यव्यथाम्? स्वार्थान्धो मानवः स्वक्रीडारसं सम्पूरयितुं कियदनर्थकरं पापमाचरति जीवानां जीवितरसायनं परिसमाप्य। आत्मनः प्रतिकूलानि परेषां न समाचरेदिति निगदति भगवान् योगेश्वरकृष्णोऽधिगीतम्। तदभिप्रायं कियन्तो विदन्ति? कारागारनिबद्धा जना एव ज्ञास्यन्ति पञ्जरबद्धानां शुकसारिकानां पीडाम्।

वस्तुतः पारतन्त्र्यं नाम मरणमेव। मृतो जनो यथा किञ्चिदपि सार्थकं कर्तुं न प्रभवति, पराधीनोऽपि तथैव मुधा करोति, मुधा हसति, मुधा रोदिति, मुधा व्यवहरति। तस्य किमपि कर्म सार्थकं न भवति। किमेतादृशेन पशुतुल्येन जीवनेन? हलाकर्षणे योक्तुकामः कृषकः किं बलीवर्दं सकृदपि पृच्छति—भो, वर्तत उत्साहो हलाकर्षणे? नैव पृच्छति। आत्मोत्साहेन आत्मालस्येन वा वराकं वृषभं योजयति मुञ्चति वा। धिगेतादृशं पारवश्यम्!

तदेव दारुणमकीर्तिकरं पारतन्त्र्यं भारतजनन्याऽपि सोढम्; परन्तु पारतन्त्र्यमिदं खलीकर्तुं भारतपुत्रैः सततयुद्धं कृतं विजयश्चान्तेऽवाप्तः। संस्कृतकवितानिबद्धा सैव गाथाऽत्र प्रस्तूयते।

चतुरशीत्यधिकसप्तदशशततमे (१७८४ A.D.) ख्रिस्ताब्दे रॉयल एसियाटिकसोसाइटीनाम्न्याः संस्थायाः संस्थापना सञ्जाता कलिकातानगर्याम्। एतावता कालेन गौराङ्गशासनं भारते स्थायित्वमवाप। ईस्टइण्डियाकम्पनीनियोजिता लॉर्डपदवाच्याः शासका भारतवर्षं शासितवन्तः, साम्राज्यविस्तरञ्चापि कर्तुं प्रयतितवन्तः। अस्मिन्नेवाऽन्तराले कलिकातोच्चन्यायालयस्य न्यायाधीशः समवाप्तसुरभारतीवैदुषीको विद्वत्प्रियः सर-विलियमजोन्समहोदयः कविकुलगुरु-कालिदासप्रणीतस्य नाटकरत्नस्याभिज्ञानशाकुन्तलस्य रूपान्तरं कृतवान् आङ्ग्ल-भाषायाम्। अस्यैव रूपान्तरस्य जॉनफॉस्टरविहितं शर्मण्यभाषान्तरमनुशीलयन्तः प्रत्यग्राऽनुभूतान्तराह्लादा महाकविर्गेटेमहोदया रूपकमिदं स्वर्गवसुधयोः सङ्गमस्थलं निरूपितवन्तः। गेटेमहाभागानामनयाऽनुशंसयैव देववाणी निखिलेऽपि पाश्चात्त्यसाहित्यजगति परं प्रथिमानं गौरवञ्च भेजे। सर्वोत्कृष्टभाषारूपेण सा महतीं प्रतिष्ठामवाप।

आङ्ग्लशासनस्य प्रथमोपक्रमे देववाण्याः परप्रतिष्ठैतावतैवाऽनुमातुं शक्यते यल्लार्डपदवाच्येन भारतशासकेन वारेनहेस्टिंग्जमहोदयेन १७८४ मिते ख्रिस्ताब्दे **विवादसारार्णव**नामा कश्चिद्धर्मशास्त्रीयग्रन्थः संस्कृतपण्डितैः कारितः, स्वयमेव च तस्य आङ्ग्लभाषान्तरमपि कृतम्। अस्मिन्नेव वर्षे चार्ल्सविल्किसमहोदयः श्रीमद्भगवद्गीतामनूदितवान् आङ्ग्लभाषया। विलियमकैरेमहोदयः खण्डत्रयेण ख्रिस्तधर्मग्रन्थस्य बाइबलस्य (न्यू टेस्टामेण्ट) संस्कृतरूपान्तरं प्रकाशितवान् १८०८-११ वर्षमध्ये। मधुसूदनतर्कालङ्कारप्रणीतः **इङ्गलैण्डीयव्याकरणसारः** १८३५ मितख्रिस्ताब्दे प्राकाश्यमुपगतः। एवमेव श्रीशैलदीक्षितोऽपि कालेनानेन विलियमशेक्सपीयरप्रणीतनाटकस्य 'कॉमेडी ऑफ एरर्स' नाम्नस्संस्कृताऽनुवादं **भ्रान्तिविलासाख्यं** विदधे।

उपर्युक्तैरेतैः प्रमाणैः संस्कृतस्य परा प्रतिष्ठा, लोकप्रियता, आङ्ग्लशासनविहितसम्मानना च स्फारीभवन्ति; परन्तु नेयं स्थितिः स्थेमानमभजत्। पञ्चत्रिंशदुत्तराष्टदशशततमे (१८३५ A.D.) ख्रिस्ताब्दे सुरभारतीशरत्कौमुदीराहुभूतो लार्डमैकालेनामा कश्चिदीर्ष्याद्विषकषायिताऽन्तःकरणोऽधिकारी समायातः, यः खलु संस्कृतप्रतिष्ठां खलीकृत्य तत्स्थाने आङ्ग्लभाषाया वर्चस्वं स्थापितवान्। प्रकृत्यैव भारतद्वेषी मैकाले संस्कृतमधिकृत्य स्वविषोद्गारं प्रकटितवान्—

**'किमस्माभिरीदृशं (संस्कृत)साहित्यं प्रोत्साहनीयं यद्भवेन्निर्भूमिकम्। मौढ्यादृते किञ्च, अविश्वासेभ्य ऋते यस्मिन्न स्यात्किञ्चिदन्यत्?**

अहो नु दौर्भाग्यं मैकालेमहोदयस्य! अन्धस्य करतले दर्पणमिव संस्कृतं तद्विचारपरिधावासीत्। भुक्तिमुक्तिदात्रीं वृन्दारकवाचमप्यसौ मूढो निर्गुणां निस्तत्त्वाञ्च मेने। मैकाले-षड्यन्त्रे कृतसंस्कृतोपकारो मैक्समूलरोऽपि सम्मिलित आसीदिति सम्यक् सिध्यति तयोः पत्राचारैः। मैक्समूलरो वेदरचनाकालं ख्रिस्तात् केवलं द्वादशशतवर्षप्राचीनं समुद्घोष्य, भारतीयधर्मसंस्कृतिसाहित्यानामर्वाचीनत्वं यथा मध्येविश्वविद्वन्निकायं प्रकाशितवान् तेन मैकालेऽतीव प्रहृष्ट आसीत्। यतो हि अनाद्यनन्तवेदज्ञानाभिमानिनो भारतीया मैक्समूलरस्थापनया प्रत्याख्याताः समतिष्ठन्। अत एव मैकाले वर्धापनपत्रं सम्प्रेष्य मैक्समूलरं सान्त्वयामास—**'यथा भवताऽऽत्मलेखजातेन भारतीयवाङ्मयस्य धर्मस्य संस्कृतेर्वा नवीनत्वं प्रमाणीक्रियते, तेन वयं बहूपकृताः। भारते च आङ्ग्लशासनप्रतिष्ठापने तेन महत्सौकर्यमवाप्यते। एतन्निमित्तं भवन्तोऽभिनन्दनीयाः पुरस्करणीयाश्चेति सन्दर्भेऽस्मिन्नहं प्रयत्नपरोऽस्मि'।**

लार्डमैकालेकृतानां संस्कृताऽधरीकरणोद्योगानां महान् विरोधोऽभून्निखिलेऽपि राष्ट्रे। सर्वेऽपि तदानीन्तनाः संस्कृतपत्रकाराः संस्कृतरक्षणाय बद्धपरिकराः सञ्जाताः। संस्कृतरत्नाकरे सूर्यनारायणशर्मा (१९०४) शारदायां कुप्पुस्वामिशास्त्री सूनृतवादिन्याञ्च जयचन्द्रसिद्धान्तभूषणः (१७ जनवरी, १९०७ मितेऽङ्के) संस्कृतपक्षमाश्रित्य दृष्ट्युन्मीलनक्षमान् विस्तृतलेखान् प्रकाशितवन्तः। काशीविद्यासुधानिधिः (१८६६ A.D.) साप्ताहिकी मञ्जुभाषिणी (१९०२ A.D.) दैनिकी जयन्ती (१९०६ A.D.) चापि लेखान् प्रकाश्य प्रतिविरोधं प्रकटितवत्यः।

यद्यपि काले तस्मिन् महाविभूतयश्शतमिता आसन् निखिलेऽपि राष्ट्रे। शासनेऽपि ते प्रतिष्ठिताः। तथापि, भारतीयाः सन्तोऽपि केचन भारतीयसंस्कृतिधर्मसाहित्यनिन्दकाः, अथ च पाश्चात्त्यसंस्कृतिचारणभूता आसन्।

राजा राममोहनरायः, राधाकान्तदेवः (१७८४-१८६७), कृष्णमोहन-वन्द्योपाध्यायः, माइकेलमधुसूदनदत्तश्चेति केचन जनास्तस्मिन् सन्दर्भे गणनीया वर्तन्ते। एते सर्वेऽपि संस्कृतभाषाया वाङ्मयस्य च घोरविरोधिन आसन्। मैकाले-माउण्टस्टुअर्ट-एलफिंस्टन-जेनरलब्रिग्सकृते संस्कृतविरोधाऽध्वरे यजमानभूमिकां निरवहद् राजा राममोहनरायः। हिन्दीभाषामहाकविर्भारतेन्दुहरिश्चन्द्रस्तद्वयस्याश्चापि राजभक्तिदीक्षिता एवासन्। एकतस्त्वसौ भारतदुर्दशानाम्नि हिन्दीनाटके ब्रिटिश-शासनं विनिन्दत्यपरतश्च विक्टोरियातनये (ड्यूक ऑफ एडिनबरा) काशीमुपागते सति **मानसोपायना**भिधमभिनन्दनग्रन्थं सम्पादयति (१८७७ A.D.), यत्र षट्षष्टिमितानां संस्कृतकवीनामपि राजस्तुतिपराणि काव्यानि प्रकाशितानि वर्तन्ते। एतत्पूर्वमपि प्रकाशिते **सुमनोऽञ्जलि**नाम्नि प्रशस्तिकाव्ये पञ्चदशमितानां संस्कृतकवीनां काव्यानि प्राकाश्यमुपगतानि।

राजप्रशस्तिकारा अन्ये चापि बहवः संस्कृतकवय आसन् तस्मिन् युगे, ये देवभारत्युपेक्षां प्रत्युदासीना दृश्यन्ते स्म। आङ्ग्लाधिराजस्वागतं जुबिलीगानमिति काव्यद्वयं (बम्बई, १८८७ A.D.) तादृग्गुणविशिष्टं लक्ष्यते। नरसिंहाचार्यो विक्टोरियाप्रशस्तिं, व्रजनाथशास्त्री चापि विक्टोरियाप्रशस्तिं प्रणिन्यतुर्यत्प्रकाशनं १८९२ मितवर्षे सञ्जातम्। हृषीकेशभट्टाचार्यः १८९० मितवर्षे राजपुत्रागमनाख्यं काव्यं प्रणिनाय। राजा सुरेन्द्रमोहनटैगोरश्च प्रिंसपञ्चाशदाख्यं १८७५ मितवर्षे विक्टोरियामाहात्म्याख्यं काव्यञ्च १८९८ मितवर्षे निबबन्ध।

सम्पत्कुमारनरसिंहाचार्यः स्वोपज्ञं विक्टोरियावैभवाख्यं काव्यमधि-संस्कृतचन्द्रिकं प्रकाशनाय प्रेषितवान्, यन्न मुद्रितवान् स्वाभिमानैकधनः सम्पादकोऽप्पाशास्त्री। किञ्च, भारतगौरवन्यक्करणार्थं काव्यकारं निर्विशङ्कं निन्दितवान्—

**पूर्वाद्यतनयोरेव विशेषः कोऽपि पद्धतौ।**
**तथापि पूर्वधिक्कारः सरलेभ्यो न रोचते।।**

पक्षविपक्षौ युगपदेव प्रवर्तेते इति प्रकृतिनियमः। यथैते संस्कृतकवयो विस्मृतभारतसौवर्णातीतकथाः स्वल्पस्वार्थसिद्ध्यर्थमाङ्ग्लशासनप्रशस्तिनिरता आसन्, तथैव दुर्मदशासनकृतभारतीयप्रजाजनशोषणव्यथिता वैदेशिकशासन-तन्त्रक्षुब्धाः स्वातन्त्र्यपक्षधराः स्वधर्मसंस्कृतिपरम्परागर्विता अन्ये शतसहस्रमिताः संस्कृतसेविनो निरन्तरमेव स्वहृदयामर्षमुद्गिरन्तस्समलक्ष्यन्त। देवेन्द्रनाथठाकुर-भवानीचरणवसु-भूदेवमुखोपाध्याय-ज्ञानेन्द्रमोहन-तारानाथतर्कवाचस्पति-ईश्वरचन्द्र-विद्यासागरप्रभृतयो महान्तस्संस्कृतज्ञास्तत्र सविशेषं स्मरणीया वर्तन्ते।

वस्तुतो व्यतीते सति सप्तपञ्चाशदुत्तराष्टादशशततमस्य वर्षस्य प्रथम-भारतीयस्वातन्त्र्यसमरे, यदा भारतशासनतन्त्रं सम्राज्ञी विक्टोरिया स्वयं गृहीतवती **वायसराया**ख्यमात्मप्रतिनिधिञ्च नियोक्तुमुपचक्रमे, तदा संस्कृतविद्वांसो देववाणीप्रतिष्ठापनार्थमाशावन्तो बभूवुः। १८५८ मितवर्षे कविवर्यो बालशास्त्री (१८२९-८२) संस्कृतगौरवपुनरानयनार्थं स्वकाव्यमयं विनिवेदनं सम्राज्ञीं प्रति प्रकाशितवान्। परन्तु सिकतायां क्व तैलम्? को नु खलु सम्राज्ञीं देववाणी-महिम्नाऽवगमयेत्? ये खलु राजभक्ताः, पाश्चात्त्यजीवनपद्धतिसम्पोषणवशात्तेषां मित्रभूता लन्दनगामिनस्ते पुनः पाश्चात्त्येभ्योऽपि समधिकतरं संस्कृतविरोधिनः। ते तु संस्कृतभाषां भारतीयधर्माचरणसंहितादिकञ्च तृणम्मन्यमाना आत्मकदर्थनाऽनुरक्ता आसन्। ये च ज्ञानविज्ञानपारगा ऋषिकल्पा विपश्चित्तल्लजास्ते पुनः स्वगृहकोणोप-रुद्धा सानुशयाः सर्वविधोपायहीनाः। एवं सति सर्वमेव ईश्वराधीनमासीत्।

सम्राज्ञ्या विक्टोरियायाः स्वर्णजयन्ती (पञ्चाशत्तमी वर्षग्रन्थिः) १८८७ मितख्रिस्ताब्दे सोत्साहं ससम्भारञ्च समाम्नाता भारते। अस्मिन्नेव वर्षे यथा शासनपक्षधरान् भारतीयान् पुरस्कर्तुं विविधोपाधयो वितीर्णाः (सर-रायबहादुर-प्रभृतयः), तथैव संस्कृतपण्डितानपि सम्मानयितुं **महामहोपाध्याय**नामा कश्चिदुपाधिरुपकल्पिता। एतावन्मात्रं संस्कृतादरनाटकं निर्व्यूढं विक्टोरियाशासनकाले; परन्तु राजकार्येषु, विद्यालयशिक्षापद्धतौ, न्यायालयादिषु च या महनीया स्थितिरासीत्संस्कृतस्य मैकालेपूर्वं सा न पुनराजगाम। राजकृपापात्रतामुपयाताः संस्कृतपण्डिताः समवाप्तमहामहोपाध्यायपदवीका एव स्वर्गसौख्यं जीवनसार्थकताञ्चानुभवन्तः परां प्रीतिमुपगताः।

परन्तु साम्राज्यवादविरोधिनः संस्कृतज्ञाः कथं राजभक्ताः स्युः? १८८२ मितवर्षे प्रकाशिते श्रीबंकिमचन्द्रस्यानन्दमठनाम्न्युपन्यासे भारतभूमिवन्दनात्मकं गीतमेकमासीत्—

**वन्दे मातरम्!**
**सुजलां सुफलां मलयजशीतलाम्**
**शस्यश्यामलां मातरम्!**
**वन्दे मातरम्!!**

अमोघमन्त्राक्षरकल्पं गीतमिदं भारतभूमिं हिमगिरिसिन्धुव्यायतां जननीरूपेण प्रतिष्ठापयामास। स्वातन्त्र्यभावनाया मूलमन्त्रभूतमिदं गीतं संस्कृतभाषयोप-

निबद्धमासीत्। अनेन सहैव आङ्ग्लशासनविरोधः समारब्धः। **उदयानन्दशर्मा** प्रबोधितवान् विस्मृतातीतगौरवान् भारतीयान्—

**'क्व वा वयं हीनतया दरिद्राः'?** इति प्रणीय।

**ड्यूक ऑफ एडिनबरा** तु कतिपयनगराण्यवलोक्य अभिनन्दन-समारोहांश्चात्मोपस्थित्या सार्थकीकृत्य प्रत्यावृतः स्वदेशम्; परन्तु दैन्यजर्जरितेषु भारतीयग्रामटिकाकुटीरेषु किमासीदवशिष्टं तत्तेन नाऽवलोकितम्। अत एव तमुपलक्ष्य जगाद **कन्हैयालालशर्मा** स्वकवितायाम्—

**दीनानां खलु दीनकर्पटभृतां क्षुत्पीडितानां गृहे**
**गत्वा सान्त्वनवारिणा द्विगुणितं दुःखं त्वदालोकनात्!!**

महाकविः सर्वतन्त्रस्वतन्त्रः **केरलवर्मा** आङ्ग्लशासनपीठमर्दभूतान् स्वप्रजाजनशातनरतान् भारतीयभूपान् निर्भरं निर्भर्त्सितवान् १८७५ मितवर्षे, यत्परिणामवशादसौ अष्टादशमासान् यावदलप्पुडा-तिरुवनन्तपुरकारागारयोरुपरुद्धो जातः। एतत्प्रमाणमुपलभ्यते तदुपज्ञे **विशाखविजय**नाम्नि महाकाव्ये—

**राजकारालयं नीतः केरलो राजपूरुषैः।**
**अज्ञातसीमं स्वातन्त्र्यविच्छेदक्लेशमन्वभूत्।।**

शिवराजविजयस्य कर्ता **श्रीमदम्बिकादत्तव्यासो**ऽपि (१८५८-१९०० A.D.) राष्ट्रभावनाया महान् सम्पोषक आसीत्। **श्रीधरपाठको** भारतगीतं भारतस्तवञ्च कृतवान् सरलमसृणपदबन्धैस्तद्यथा—

**वन्दे भारतदेशमुदारम्। सुषमासदनसकलसुखसारम्।।**
**भालविशालहिमाचलभ्राजम्। चरणविराजित-अर्णवराजम्।।**
**तपधृतसहसकोटिकरवालम्। दुसहदुरापप्रतापविशालम्।।**

लब्धयशा महान् पत्रकारो**ऽप्पाशास्त्रि**महोदयो मातृभक्तिनाम्नीं मर्मस्पर्शिनीं कवितां संस्कृतचन्द्रिकायां (१८९४ A.D.) प्रकाशितवान्। अधर्मविपाकाख्ये काव्ये संस्कृतचन्द्रिकोट्टङ्किते (७ अगस्त, १८९७ अङ्के) राशिवड़ेकरोऽप्पाशास्त्री पाश्चात्यसंस्कृत्यन्धानुकरणमुग्धान् भारतीयान् सव्यङ्ग्यं निर्भर्त्सितवान्। तद्यथा—

**गोर्नात्मेति वचः प्रमाणयति च प्रावारकं नेहते**
**वक्त्रं मुण्डयते स्वयं प्रतिदिनं धत्ते शिखां तालुनि।**
**सूक्ष्मं द्रष्टुमपीश्वरो नयनयोर्न्यस्योपनेत्रद्वयं**
**प्रद्युम्नं लघयन्निवात्मवपुषाऽस्माकं धिनोत्यन्तरम्।।**

**सरोजमोहिनी** देव्यपि पाश्चात्त्यजीवनपद्धतिलोलुपा महिला विनिन्दन्ती विद्योदयपत्रिकायां लिलेख (खण्डः १९, १८९० A.D.)—

**धात्र्यै समर्प्यैव हि बालकानां सम्पालनं वा खलु रन्धनं वा।**
**संन्यस्य हस्ते परिचारिकाणां रक्ता असन्नाटकपाठकार्ये।।**

हिन्दीसाहित्यपुरोधा **आचार्यमहावीरप्रसादद्विवेदी** (१८६४-१९३८ A.D.) उभयभाषाकविरासीत्। हिन्दीभाषयाऽसौ घोषयामास—

जिसको न निज गौरव तथा निज देश का अभिमान है,
वह नर नहीं नरपशु निरा है और मृतक समान है!!

काव्यमिदमाचार्यः स्वशिष्यवर्यस्य गणेशशङ्करविद्यार्थिन आग्रहवशात् प्रणिनाय। इदं वाक्ययुगलं विद्यार्थिसम्पादितप्रतापाख्यपत्रस्य मुखपृष्ठे सन्देशरूपेण प्रत्यङ्कं मुद्र्यते स्म। काव्यान्तरे श्रीद्विवेदिमहाभागः कथयति—

हम बुलबुल तू गुल है प्यारा। तू सम्बल, तू देश हमारा
हमने तन-मन तुझ पर वारा। तेजस-पुञ्ज विशेष!!
आँख अगर कोई दिखलावे। उसका दर्प-दलन हो जावे
फल अपने कर्मों का पावे। बने नाम निश्शेष!!
जै जै प्यारे देश हमारे। तीन लोक में सबसे प्यारे
हिमगिरि-मुकुट मनोहर धारे। जै जै सुभग सुवेष!!

स एवाचार्यद्विवेदी संस्कृतचन्द्रिकायां (१ जून, १८९८) समाचारपत्रसम्पादकस्तवाभिधां कवितां प्रकाशितवान्। राजभक्तान् सम्पादकानसौ आङ्ग्लप्रभुसेवकभूतान् कदर्यांश्च निरूपितवान्। कृतघ्नसम्पादकास्ते कीदृशा आसन्निति ज्ञायते द्विवेदिपद्यबन्धेनैकेन—

**इहास्ति साधुत्वमतः परं किं प्रकाश्य लोकस्य विमाननां यत्।**
**स्थिते भये पाणियुगं प्रसार्य क्षमस्व मोदस्व च भाषसे त्वम्!!**

किञ्च, यथा यथा वैदेशिकशासकानामत्याचारा उपचिताः, यथा वा तेषां विविधानि दुष्कृत्यानि जघटिरे, तथा संस्कृतकवयः पत्रकाराश्च तद्विरोधार्थं बद्धपरिकराः सञ्जाताः। पञ्चाधिकोनविंशतिशततमे ख्रिस्ताब्दे (१९०५ A.D.) वायसरायकर्जनो बङ्गवसुन्धरां विभाजितवान्, येन न केवलं बङ्गवासिनोऽपि तु निखिलमेव राष्ट्रं शोकसन्तप्तं जातम्। भारतवर्षं प्रति कर्जनस्य यदवमाननमासीत्,

या च हीनदृष्टिरासीत्, तत्सर्वं सुष्ठु विज्ञाय अप्पाशास्त्री-राशिवडेकरः संस्कृतचन्द्रिकायां निर्भयं लिलेख—

'भारतवर्षेऽस्मिन् दोषानारोपयता लार्डकरधनमहोद्रयेन स्वजातीयानामेव अनेकेषां वचसि विश्वासो नाविष्कृतः। नूनमेतदाश्चर्यमेव! एतज्जातीया हि भूयांस एव पण्डिताः सानन्दं निर्भरं भारतं प्रशंसन्ति स्म'।

अत्राऽवधेयमिदं तथ्यं यल्लार्डकर्जनः श्रीगोपालकृष्णगोखलेमहोदयं वञ्चनपरायणमश्रद्धेयञ्च निरूपितवान्। भारतस्वातन्त्र्यसूत्रधारसमवायमप्यसौ प्रवञ्चकानां यूथं घोषितवान्।

बङ्गभङ्गे सञ्जात एव भारतवासिनः संक्षुब्धा जाताः। सर्वत्रापि क्रान्तिस्वरोऽश्रूयत। सर्वत्रापि विरोधः समदृश्यत। **यादवेश्वरतर्करत्नः** अश्रुविसर्जनाख्यां कवितां प्रणीय बङ्गभङ्गपीडामात्मनीनां प्रकाशितवान्। **ताराचरणभट्टाचार्यः** (बनारसषड्यन्त्रसंयोजनसदस्यः) भारतगीतिकां विरचय्य स्ववेदनां प्रकटितवान्। १६ अक्टूबर, १९०५ तिथौ कलिकातानगर्यां बङ्गभङ्गमुपलक्ष्य राष्ट्रियशोकदिवसः समाम्नातः। वन्दे मातरमिति स्वातन्त्र्यगीतमुद्गायन्तः परःसहस्रमिताः स्त्रीपुरुषा गङ्गापुलिनमासेदुः, स्ववेदनां, हृदयाऽमर्षं, शासनविरोधञ्च प्रकटितवन्तः।

अहो नु नियतिलीलाविलसितम्! असंस्कृतज्ञान् गौराङ्गराजपुरुषान् कश्चिद् भारतीय एवाऽवगमयति स्म यदेते वन्दे मातरं-गायकाः प्रोत्साहयन्ति सर्वान् यद् वध्यतां मार्यतां चाङ्ग्लजन इति। अनर्थपरमिमं गीतार्थं सत्यं मन्वाना गौराङ्गा राजपुरुषाः समधिकं नृशंसाः सञ्जाताः। किञ्च, क्रोधान्धैर्निर्विवेकैस्तैः पशुमारं मारिताः पुञ्जीभूताः स्त्रीपुरुषाः। बङ्गेषु स्वदेशीयान्दोलनमिति शीर्षकेऽग्रलेखे संस्कृतचन्द्रिकाप्रकाशिते (नवम्बर, १९०५ मितवर्षे) अप्पाशास्त्री लिखति—

**'स्वजनविद्वेषिणः पुनः केऽपि दुर्मतयो 'वन्दे मातरम्' इति पदद्वितयस्य वध्यतां मार्यतां चेत्यर्थं बोधयन्ति'।**

१९०८ मितवर्षे क्रूरशासनेन खुदीरामबोसाख्यो भास्वरस्वातन्त्र्यदीपो न्यायनाट्यमभिनीय निर्वापितः। समग्रमेव राष्ट्रमवसन्नं जातम्। षट्त्रिंशन्मिता अन्ये नवयुवानो गृहीताः। हाहाकारः सम्प्रवृत्तो दर्शं दर्शं नृशंसशासननग्नताण्डवम्। स्वश्रद्धाञ्जलिं समर्पयता सूनृतवादिनीसम्पादकेन लिखितम्—

**'घटिकाऽर्धमात्रेण च प्रायासिषुरमुष्य प्राणाः। प्रेतस्य चामुष्य मुखं स्मयमानमिवासीत्।**

भारतजननीदुर्ललिततनयं खुदीराममभिलक्ष्य कवितां मर्मोद्घाटिनीं निबन्धञ्च ब्रिटिशशासनच्छिद्रान्वेषणपरं लिखित्वैव **अप्पाशास्त्रिपञ्चाननतर्करत्नौ** च कारागारे निबद्धौ। तथापि किमेतावता? कारावासव्यथां निषेव्याऽपि स्वदेशानुरागिणां क्रान्तिस्वरो नाऽपचितः। स्वराष्ट्रवासिजनान् प्रबोधयन् अप्पाशास्त्रिराशिवडेकरो निजगाद—

भय बोध राजभक्तिं जहि पारतन्त्र्यपाशं
त्यज दैववादवेगं ननु पौरुषं श्रयस्व।
भज सङ्घशक्तियोगं त्यज भूरि भेदरोगं
परिलिप्स्यसे सुयोगं स्वभिमानरक्षितोऽसि।।

एवमेव **'पञ्जरबद्धः शुकः'** इत्याख्ये काव्येऽप्पाशास्त्री शुकव्याजेन पारतन्त्र्यपाशबद्धानां भारतीयानां मनोव्यथां सन्तापञ्च साधु विशदीचकार। काव्यमिदं पारतन्त्र्यपीडामभिव्यनक्ति।

मध्ये मध्ये सुबहु वृत्तजातं घटितं यस्य प्रतिक्रियात्मकं चित्रणमवाप्यते तदानीन्तनेषु संस्कृतपत्रेषु। निर्वासितो लालालाजपतरायः पञ्जाबकेसरी। 'कस्येदं निर्वासनम्' इति शीर्षकेण बृहल्लेखं प्रकाश्य सूनृतवादिनीसम्पादकः (अप्रैल, १९०७ मितवर्षे) लाजपतरायस्य महिमानं निरूप्य तस्य निर्दोषत्वमपि साधितवान्। अनेन निष्ठुरशासनस्य षड्यन्त्रं विशदीभूतम्। तावता कालेनैव भारतीयसैनिका रावलपिण्डीनगरे विद्रोहिणः सञ्जाताः। ततश्च ते शासनेन निर्दयं दण्डिताः। अनर्थकरवृत्तमिदं समुद्घाटयता सूनृतवादिनीसम्पादकेन निबन्धो व्यलेखि पत्रिकायाम्—**'अन्याय्यं किमपि'** इति शीर्षकेण।

**'स्वराज्यमस्माकं जन्मसिद्धोऽधिकारः'** इति स्वातन्त्र्यमन्त्रघोषको लोकमान्यो बालगङ्गाधरतिलकोऽपि शासनेन दण्डितो निर्वासितश्च। सूनृतवादिनीसम्पादकः पत्रिकायाः २३ जुलाई, १९०८ मितेऽङ्के **'हा धिक् कष्टम्! दण्डितो महात्मा तिलकः'** इति शीर्षकेण निजाग्रलेखं सङ्ग्रथ्य तिलकमहाभागानां व्यक्तित्वं कर्तृत्वञ्च सम्यगालोचितवान्। स्वप्रणामाञ्जलिं प्रस्तुवन्नसौ व्याजहार—

**निगदन्तु निसर्गदुर्धियो निगडं दूषणमित्यमुं तव।**
**अपरं स तथापि भूषणं भवतो येन विशिष्य पूज्यते।।**

भवतु। भारतीयस्वातन्त्र्यसङ्ग्रामकथेयं क्रान्तिवीराऽरविन्दघोषप्रणीताया भवानीभारत्याश्चर्चां विना न सार्थवती भविष्यति। योगसिद्धेः प्राग् **अरविन्दघोषो**

महान् क्रान्तिनायक आसीत्। अलीपुरकारागारे निरुद्धोऽसौ १९०६ मिते ख्रिस्ताब्दे **भवानीभारतीं** प्रणीतवान्। अपूर्णे नवनवतिपद्यात्मकेऽस्मिन् खण्डकाव्ये भारतधरित्री भवानीभारतीरूपेण चित्रिता राष्ट्रभक्तेन कविना। प्रतिश्लोकमनुभूयते दुर्वारस्स्वातन्त्र्यभावः। काव्यमिदं चिरकालं यावद् ब्रिटिशशासनेन यावत्प्रतिबन्धित आसीत्।

स्वातन्त्र्यसमरावधौ यथा सुब्रह्मण्यभारती महोदयस्य काजीनजरुलइस्लामस्य मैथिलीशरणगुप्तस्य वा कविताः स्वदेशवासिनां मनस्सु विलक्षणोत्साहसञ्चारं विदधिरे, यथा वा कर्नलरामसिंहप्रणीतं **'कदम कदम बढ़ाये जा, खुशी के गीत गाये जा'** इत्याख्यं काव्यञ्च आजादहिन्दसैन्यस्य प्रयाणगीतं जातम्, यथा वा श्यामलालपार्षदप्रणीतं राष्ट्रध्वजगानं (**झण्डा ऊँचा रहे हमारा** इति), रामप्रसादबिस्मिलप्रणीतम् आत्मोत्सर्गगीतं (**सरफरोशी की तमन्ना अब हमारे दिल में है** इति) च स्वातन्त्र्यपथपथिकानां भारतीयानां कण्ठे कण्ठे समतिष्ठत्, सर्वथा तथैव तद्युगीनानां संस्कृतकवीनां काव्यान्यपि स्वाधीनतामन्त्रभूतान्यासन्। भाषाया विरलप्रचारवशात् सर्वजनाऽनवगमवशाच्च कामं तेषां गीतानां यथोचितोपयोगो न सञ्जातस्तथापि गीतविन्यस्तस्वातन्त्र्यसंवेदना भाषान्तरापेक्षयाऽधरीकर्तुं न कथमपि शक्याः।

तद्युगीनेषु पत्रपत्रिकासु एवंगुणविशिष्टाः शतसहस्रमिताः कविताः प्राकाश्यमुपगतास्तद्यथा—शारदाचरणमिश्रकृतं भारतगौरवम्, कृष्णमाचार्यकृतं भारतगीतम्, तिलकमञ्जरीसङ्ग्रहश्च, नगरकरप्रणीता राष्ट्रिया जागृतिः, आत्मारामशास्त्रिकृतं शिवहृदयम्, एम.के.ताताचार्यप्रणीतो भारतीयमनोरथः, वरदकृष्णमाचार्यकृतो भारतखड्गः, रामावतारशर्मप्रणीतम् अभिनवभारतम्, चारुचन्द्रवन्द्योपाध्यायकृतं मातृसम्बोधनम्, केशवगोपालकृतं तिलकसौभाग्यम्, विधुशेखरभट्टाचार्यप्रणीतं काव्यत्रयम् (भारतभूमिः, बद्धविहगः, उद्‌बोधनम्), कृष्णदेवकाव्यतीर्थप्रणीतं भारतवर्षम्, पी.शंकरसुब्रह्मण्यशास्त्रिप्रणीता भारतकौमुदी, द्विजेन्द्रब्रह्मचारिकृता 'मातृभूमिः', विजयचन्द्रशर्मप्रणीता उद्‌बोधनगाथा, शालग्रामशास्त्रिकृतं प्रबोधनम्, मेधाव्रताचार्यप्रणीता कविता—मातः का ते दशेति, म.म.गिरिधरशर्मचतुर्वेदप्रणीता जातीयप्रार्थना, लक्ष्मीनारायणशिवप्रसादशर्मप्रणीतं भारतेतिवृत्तसारञ्च।

सूनृतवादिनी (१९०६-१९०९) साप्ताहिकी पत्रिका स्वातन्त्र्यपक्षधरी तस्मिन् युगे महिम्नः परां काष्ठामधिरुरोह। ब्रिटिशशासनकोपभाजनभूतेयं पत्रिका मार्चमासे १९१० मिते ख्रिस्ताब्दे प्रकाशनादुपरता।

ब्रिटिशशासनकालस्य प्रमुखाः संस्कृतपत्रपत्रिका नाम्नैव निर्दिश्यन्ते। अस्मिन् सन्दर्भे विस्तृतपरिज्ञानार्थं विद्वत्प्रवराणां डॉ. हीरालालशुक्लमहाभागानां ग्रन्थरत्नं **'संस्कृत का समाजशास्त्र'**[१] इत्याख्यं सर्वैरिव परिशीलनीयम्—

| पत्रिकाऽभिधानम् | प्रकाशनस्थानम् | प्रकाशनावधिः |
|---|---|---|
| १. जयन्ती (दैनिकी) | त्रिवेन्द्रम् | १.१.१९०७-४.१.१९०७ |
| २. मञ्जुभाषिणी (पञ्चाह्निकी) | काञ्ची | १९०२-१९०३ |
| ३. मञ्जुभाषिणी (साप्ताहिकी) | काञ्ची | १९००-१९२५ |
| ४. विज्ञानचिन्तामणिः (साप्ताहिकी) | पट्टाम्बि (केरल) | १९०२-१९२० |
| ५. सूनृतवादिनी (साप्ताहिकी) | कोल्हापुरम् | १९०६-१९१० |
| ६. संस्कृतसाकेतम् (साप्ताहिकम्) | अयोध्या | १९२०-१९४७ |
| ७. संस्कृतम् (साप्ताहिकम्) | अयोध्या | १९३०-१९४७ |
| ८. देववाणी (साप्ताहिकी) | कलकत्ता | १९३४-१९४० |
| ९. मञ्जूषा (साप्ताहिकी) | कलकत्ता | १९३६-१९३७ |
| १०. विद्यार्थी (पाक्षिकम्) | पटना | १८८०-१८८२ |
| ११. विद्वन्मनोरञ्जिनी (पाक्षिकी) | मद्रास | १९०६-१९२० |
| १२. अमरभारती (पाक्षिकी) | त्रिवेन्द्रम् | १९१०-१९१८ |
| १३. मित्रम् (पाक्षिकम्) | पटना | १९१८-१९२५ |
| १४. सूर्योदयः (पाक्षिकः) | वाराणसी | १९२६-इदानीं यावत् |
| १५. सुप्रभातम् (पाक्षिकम्) | वाराणसी | १९३४-१९३८ |
| १६. सहस्रांशुः (पाक्षिकः) | वाराणसी | १९२७-१९२९ |
| १७. वाङ्मयम् (पाक्षिकम्) | वाराणसी | १९४०-१९४२ |
| १८.उच्छृङ्खलम् (पाक्षिकम्) | वाराणसी | १९४१-१९४३ |

यद्यपि प्राचीनतादृष्ट्या काशीविद्यासुधानिधिनाम्नी (पण्डितपत्रिकेत्यपर-पर्याया, १८६६-१९१७) साहित्यपत्रिकैव इदम्प्रथमतां भजते; परन्तु संस्कृतग्रन्थप्रकाशनैकमात्रलक्ष्येयं पत्रिका स्वातन्त्र्यसमरगाथाविरहितैव सन्दृश्यते; परन्त्वन्या उपरि निर्दिष्टाः पत्रिकाः स्वातन्त्र्यान्दोलने महतीं भूमिकां निरवहन्। तद्युगीनाः पत्रपत्रिकासम्पादका दामोदरशास्त्रि[२]-हृषीकेशभट्टाचार्य[३]-

१. भारतीय-विद्या-प्रकाशनम्, दिल्ली। प्रथमसंस्करणम्, १९८९।
२. विद्यार्थिसम्पादकः;  ३. विद्योदयसम्पादकः।

मोहनलालविष्णुपण्ड्या-नीलकण्ठशास्त्रि[१]-जयचन्द्रसिद्धान्तभूषणभट्टाचार्य[२]-अप्पाशास्त्रिराशिवडेकर[३]-वी.कामेश्वरार्य[४]-प्रतिवादिभयङ्करानन्ताचार्य[५]-हनुमत्प्रसादत्रिपाठि[६]प्रभृतयो दम्भोलिपातोपमकण्ठा अकुतोभया नीरक्षीरविवेकिनो भारतीयस्वातन्त्र्यसमरसमर्थकाः स्वराष्ट्राऽभिमानिनश्चासन्। एषाम्मध्ये कियन्त एव शासनविरोधवशात् कारावासदण्डमपि सोढवन्तः। तत्सर्वं विलक्षणमेव राष्ट्रियवृत्तमितिमात्रं विनिवेद्य विरम्यते।



१. विज्ञानचिन्तामणिसम्पादकः; २. संस्कृतचन्द्रिकासम्पादकः।
३. संस्कृतचन्द्रिका-सूनृतवादिनीसम्पादकः; ४. सहृदयासम्पादकः।
५. शास्त्रमुक्तावली-मञ्जुभाषिणीसम्पादकः; ६. संस्कृतसाकेतसम्पादकः।

# वेदान्तमीमांसाशास्त्रारम्भणं युक्तम्

**प्रो० पारसनाथद्विवेदी**
आचार्योऽध्यक्षश्च, वेदान्तविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



पूजितविचारवचनो मीमांसाशब्दः। मान्-धातोर्विचारार्थकात् 'मान्-वध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य' (पा.३.१.६) इति सूत्रेण 'मानेर्जिज्ञासायाम्' इति वार्त्तिकसहकारेण स्वार्थे सनि अभ्यासस्य दीर्घत्वे मीमांसाशब्दो निष्पद्यते। मानेर्जिज्ञासायामिति वार्त्तिके जिज्ञासाशब्दो विचारार्थ एव सर्वसम्मतः। विचारे पूजितत्वञ्च प्रमाणानुगृहीतत्वम्। वेदान्ता उपनिषदः। शास्त्रत्वं तेषां वेदान्तानां हिताहितेषु प्रवृत्तिनिवृत्तिकरत्वात्। मीमांसाद्वयं प्रसिद्धम्—पूर्वमीमांसोत्तरमीमांसा चेति। पूर्वमीमांसाशास्त्रे धर्मविचारः प्रस्तुतः कर्मकाण्डभागपठितवाक्यानाम्। अथातो धर्मजिज्ञासेत्यारभ्य द्वादशाध्यायलक्षणं कर्मप्रतिपादकं शास्त्रं पूर्वमीमांसाशब्देनोच्यते। अथातो ब्रह्मजिज्ञासेत्यारभ्यानावृत्तिशब्दादित्यन्तो ग्रन्थराशिः चतुरध्यायलक्षणो ब्रह्ममीमांसा-वेदान्तमीमांसा-शारीरकमीमांसा-उत्तरमीमांसादि-शब्देनाभिधीयते।

तत्रेदं विचार्यते—उभे मीमांसे एकशास्त्रं पृथक् शास्त्रं वेति? मीमांसाशब्दाभिधेयत्वाद् वेदार्थविचाररूपत्वाच्च जायत एवंविधा जिज्ञासा। तत्र रामानुजीयाः प्राहुः—कर्मब्रह्ममीमांसयोरेकशास्त्रत्वम्। नियतपौर्वापर्यभागद्वयात्मक-वेदाख्यैकप्रबन्धरूपत्वात्। अनेकव्यतिरेकेण सांख्यन्यायवत्। यथोक्तं श्रीभाष्ये श्रीरामानुजाचार्यैः स्वभाष्योपजीव्यभूतश्रीबोधायनवाक्यं प्रमाणीकुर्वद्भिः—मीमांसा-पूर्वभागजातस्य कर्मणोऽल्पास्थितफलत्वात्, उपरितनभागावसेयस्य ब्रह्मज्ञान-स्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः—वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्रत्वम्—'संहितमेतच्छारीरकं जैमिनीयेन षोडश-लक्षणेनेति शास्त्रैकत्वसिद्धिः' इति। अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवद्

अध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः (श्रीभाष्यम्—१.१.१)। अनेन वाक्य-सन्दर्भेण विज्ञायते यत्—मीमांसाशास्त्रमेकं भागद्वयात्मकं षोडशाध्यायलक्षणम्। भागद्वयञ्च प्रतिपिपादयिषितार्थभेदेन अध्यायभेदादिवत्। तथा च यथैकस्मिन् ग्रन्थे प्रतिपाद्यविषयभेदाद् अध्यायादिभेदो भवति, तथैवेहापि कर्मब्रह्मणोः प्रतिपाद्ययो-र्भेदाज्जैमिनिबादरायणयोः कर्त्रोर्भेदात् स्वर्गमोक्षफलयोर्भेदाद् भिन्नयोरपि तयोरेक-प्रबन्धत्वं न विरुद्धम्। अनेककविकृतरामचरितादिप्रबन्धवत्। वामनजयादित्यविरचित-काशिकाग्रन्थवच्च। एकस्मिन्नपि मीमांसाशास्त्रे जैमिनीये यथा षट्कभेदोऽध्याय-भेदादिश्च न शास्त्रभेदप्रयोजकः। षट्कं नाम षण्णामध्यायानां समूहः। विषयभेदात् प्रायः शास्त्रेषु तथाविधो भेदो दृश्यते। यथा गीतादिशास्त्रेषु प्रथमषट्के द्वितीयषट्के इत्यादिव्यवहारः। तथैव त्रिसूत्रीचतुस्सूत्रीत्यादिभेदव्यवहारेऽपि शास्त्रभेदो न दृश्यते। एवं वेदाख्यैकप्रबन्धविचाररूपत्वाद् उभयोरेकप्रबन्धत्वं तैराचार्यैरङ्गीकृतम्।

अत्रोच्यते—वेदान्तमीमांसाशास्त्रं कर्ममीमांसातः पृथक् शास्त्रम्, अधिकारिविषयप्रयोजनादिभेदाद् न्यायादिशास्त्रवत्। कर्मब्रह्ममीमांसयोर्नैकशास्त्रत्वम्, अधिकारिविषयप्रयोजनादिभेदाद् वा। कर्ममीमांसायाः स्वर्गकामोऽधिकारी, इह तु मुमुक्षुः। न चैकपुरुषे उभयोः शास्त्रयोरधिकारिता सम्भवति। रागी स्वर्गकामः आत्मनः परलोकसम्बन्धित्वमवगम्याधिकारितावच्छेदकब्राह्मणत्वक्षत्रियत्वा-काणत्वाद्यहङ्कारवान् कर्तृत्वभोक्तृत्वाभिमानवान् स्वर्गकामो यजेतेत्यादिशास्त्रेण नियोज्यते। ब्रह्ममीमांसायाञ्च विरक्तः शान्तो दान्त उपरतः कर्मफलेषु अल्पास्थिरत्वादि विजानन् ब्रह्मज्ञानेन स्थिरमहाफलमिति ज्ञात्वा मोक्षार्थी कर्तृत्वभोक्तृत्वाद्यभिमानरहितोऽधिक्रियते। 'शान्तो दान्तः, तद्यथेह कर्मचितो लोकः क्षीयते'—इत्यादिश्रुतेः। तद् यदि एकं शास्त्रं स्याद् एकविध एव, स्वर्गार्थी मोक्षार्थी वा अधिकारी स्यात्। एकत्र उभयोरधिकारितावच्छेदकधर्मयोः रक्तत्वविरक्तत्वयो-रसम्भवात्। न चैक एवाधिकारी फलस्वाम्यभाक् स्वाध्यायोऽध्येतव्य इत्यादिना वेदाध्ययने नियुक्तः कृताक्षरग्रहणापाततोऽर्थग्रहणरूपाध्ययनः स एव धर्माख्यविधिनिषेधात्मकर्मावबोधे अथातो धर्मजिज्ञासेत्यादिशास्त्रेण नियुक्तः, स एव च सम्यग् कर्मावबोधपूर्वकं कृतानुष्ठानः कर्मफलेषु असारतामनुसन्दधानः, अत एव विरक्तो मोक्षकामो ब्रह्मजिज्ञासायां नियुक्त इति वाच्यम्, बहुशो विरोधात्। तथा हि—वेदाध्ययनं ततः कर्मावबोधस्ततः कर्मानुष्ठानं ततो ब्रह्मजिज्ञासेति क्रमोऽभिहितः। तस्मिन् यदि कार्यकारणभावस्तर्हि तन्नोपपद्यते—कर्मावबोधे सत्यपि ब्रह्मजिज्ञासा न दृश्यते, असत्यपि कर्मावबोधे ब्रह्मजिज्ञासा दृश्यते। अतः कार्यकारणभावः कर्मब्रह्ममीमांसयोर्नास्ति। यत्रापि कर्मावबोधादनन्तरं ब्रह्मजिज्ञासा

जायते, तत्र न तदेव हेतुरपि तु कर्मफलस्वर्गादेरनित्यत्वावगम एव। कर्मावबोधे सम्पन्ने ब्रह्मजिज्ञासा कर्तव्या इति, यदि अथातो ब्रह्मजिज्ञासेत्यस्यार्थस्तदा न व्यर्थतैवास्य वाक्यस्य स्यात्, कर्मावबोधस्य जिज्ञासाया अप्रयोजकत्वात्।

किञ्च कर्मावबोधानन्तरं कर्मानुष्ठानं स्यात्। न च शक्यं कर्मानुष्ठातुं तत्त्यक्तुं च सहैव। कर्माण्यनुष्ठाय स्वर्गार्थी स्वर्गफलं प्राप्नुयात्, न च ब्रह्म जिज्ञासेत। अथासक्तभावेन कर्मानुष्ठानं तच्च कर्मानुष्ठानं चित्तशुद्ध्यर्थमननुष्ठानमिव भवति, स्वर्गादिफलासाधकत्वात्। अथ कर्मानुष्ठानं ब्रह्मज्ञानञ्च सहैव समुच्चित्य विधानमुच्यते, तदपि न, तयोरत्यन्तविरोधयोः सहसम्भवाभावात्। कर्मानुष्ठानब्रह्मविद्ययोः सहसमुच्चयस्य भगवत्पादैः सर्वत्र भाष्ये निराकरणात्। तस्मादुभयोः शास्त्रयोर्नैकाधिकारित्वं सिध्यति। अधिकारिभेदात् शास्त्रभेदः। प्रतिपाद्यविषयभेदाच्च नैकशास्त्रत्वमुभययोः कर्ममीमांसायाः विषयो विधिनिषेधात्मकं कर्मैव धर्माधर्माख्यम्। तच्च साध्यं चोदनातन्त्रं पुरुषाधीनं कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं स्वर्गनरकादिसाधकमुत्पाद्यविकार्यसंस्कार्याद्यचतुर्विधभेदभिन्नमनित्यं दृष्टम्। ब्रह्ममीमांसायाश्च विषयः—ब्रह्म शुद्धबुद्धमुक्तस्वभावसच्चिदानन्दानन्तात्मकं सिद्धं नित्यं न चोदनातन्त्रं न वा पुरुषाधीनमुत्पाद्यादिचतुर्विधभेदरहितप्रत्यगभिन्नमिति प्रतिपाद्यविषयभेदेनोभयोरेकशास्त्रत्वम्।

किञ्च प्रयोजनभेदादपि नोभयोरेकशास्त्रत्वम्। कर्ममीमांसायाः प्रयोजनं कर्मज्ञानं तच्च अनुष्ठानापेक्षं स्वर्गादिसाधकम्। ब्रह्ममीमांसायाश्च ब्रह्मज्ञानं प्रयोजनं तच्च नानुष्ठानापेक्षं सर्वक्लेशपरिहाणानन्तानन्दप्राप्तिरूपनिःश्रेयससाधकमिति प्रयोजनभेदान्नोभयोरेकप्रबन्धत्वम्। एवं कर्तृभेदात् पूर्वोत्तरकाण्डनिबन्धनत्वात् कर्मब्रह्ममीमांसाशब्दव्यवहारविषयत्वाच्चानेकहेतुभिर्नैकशास्त्रत्वं सिध्यति। एवं बहुभेदसत्त्वे वेदार्थविचारत्वमात्रहेतुना शास्त्रैकत्वसमर्थनं न युक्तम्। शास्त्रैकत्ववादिनामप्युभयोर्भागयोर्विषयादिभेदेन भेदाङ्गीकाराच्च। एवं बहुविधभेदवैशिष्ट्यसद्भावे निश्चिते भिन्नशास्त्रत्वे एकशास्त्रत्वाङ्गीकारो निष्प्रयोजनः। षोडशाध्यायलक्षणमेकं शास्त्रमित्यादिव्यपदेशमात्रादन्यत् किञ्चित् प्रयोजनं नास्ति। एवञ्चेद् मोक्षप्रतिपादकशास्त्रत्वात् सर्वेषामेव न्यायादिशास्त्राणामेकशास्त्रत्वापत्तिः स्यात्। तथा श्रीरामानुजीयानुमानमधिकारिविषयप्रयोजनाभेदरूपस्योपाधित्वात्। भेदानुमानेन पूर्वोक्तेन सत्प्रतिपक्षितत्वाच्च एकवेदनिबन्धनव्याकरणज्यौतिषादिशास्त्रेषु व्यभिचाराच्च निरस्तं वेदितव्यम्।

न च अथातो धर्मजिज्ञासेत्यनेन धर्मशब्देन वेदार्थमात्रस्योपलक्षणाद् ब्रह्मजिज्ञासाया अपि तेनैव गतार्थत्वं युक्तमिति वाच्यम्, एवं सति

वेदार्थमात्रजिज्ञासां प्रतिज्ञाय सिद्धब्रह्मबोधकवाक्यानां मीमांसासूत्राणि अरचयतां परमर्षीणां जैमिनीयानामन्यायत्वापत्तेः। न च ते तत्रभवन्तो प्रारम्भे वेदार्थजिज्ञासां प्रतिज्ञाय ब्रह्मप्रतिपादकवाक्यमीमांसां विस्मरेयुः। अतो ब्रह्ममीमांसा अप्रतिज्ञातैव महर्षिणेत्येव कल्पना ज्यायसी, अन्यथा अथातो वेदार्थजिज्ञासेत्येव सूत्रयेत्। अत एव जैमिनिनोभयोरेकशास्त्रत्वं न विवक्षितम्। न च धर्मशब्देन साधारणी प्रतिज्ञा कृता। धर्मश्च द्विविधः साध्यसिद्धभेदेन। सिद्धेऽपि ब्रह्मणि बहुशो धर्मपदप्रयोगात्। 'अणुरेष धर्मः' महाभारतादौ च—

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ।।

इत्यादिरूपेण दृष्टत्वात्। तथा च साध्यधर्मसिद्धधर्मयोरुभयोरपि धर्मशब्देनैव गृहीतत्वाद् उभयप्रतिज्ञाया उपपद्यमानत्वात्। उभयभागस्यैकशास्त्रत्वं न विरुध्यत इति वाच्यम्। धर्मशब्देन चोदनालक्षणार्थस्यैव सूत्रे ग्रहणात्। चोदनालक्षणोऽर्थो धर्म इति स्वयमेव सूत्रकारेण धर्मशब्दार्थस्योक्तत्वात्। न च सिद्धधर्माख्यं ब्रह्म चोदनालक्षणम्, ब्रह्मज्ञानस्य चोदनाजन्यत्वात्। धर्मशब्दस्य च साध्ये यागादिकर्मणि चोदनाप्रतिपाद्ये प्रयोगस्य क्लृप्तत्वात् सिद्धे ब्रह्मणि धर्मशब्दवाच्यत्वाभावादिति।



# निम्बार्काचार्यस्य सिद्धान्तसारः

**डॉ. आदित्यनाथभट्टाचार्यः**
अध्यक्षः, संस्कृतविभागस्य,
वर्धमानविश्वविद्यालये,
पश्चिमवङ्गः

***

आचार्यनिम्बार्कप्रचारितो द्वैताद्वैतवादः प्रथमं सनकसनन्दनसनातनसनत्कुमारैः ब्रह्मणो मानसपुत्रैर्हंसावतारस्य विष्णोः सकाशादधिगतः। स च महर्षिणा नारदेन सनकादेः सकाशाल्लब्धः। अनन्तरं नारदमुखाद् गुरुपरम्परया निम्बार्काचार्यसविधं समागतः। अतो निम्बार्काचार्यसम्प्रदायः 'हंससम्प्रदाय'नाम्ना 'सनकादिसम्प्रदाय'नाम्ना च सुख्यातोऽभवज्जगतीतले।

प्राचि आचार्यनिम्बार्कस्य नियमानन्दाचार्य इति नाम आसीत्। स च लोकोत्तरशक्तिसम्पन्नोऽभवत्। एकदा कश्चित् सन्न्यासी निम्बार्काचार्यस्याश्रमे आतिथ्यं गृहीतवान्। दार्शनिकतत्त्वालोचनया आसन्नप्राये सूर्यस्यास्तागमनकाले स सन्न्यासी निम्बार्कप्रदत्तमाहारं ग्रहीतुं न स्वीचकार। ततश्च निम्बार्कः सूर्यं तथा आदिष्टवान्, येन सन्न्यासिन आहारसमाप्तिं यावत् सूर्य आश्रमस्थनिम्बवृक्षोपरि निश्चलः सन् अवतिष्ठेत। सूर्यश्च अस्ताचलमगत्वा यथादेशं निश्चलमवस्थितः। ततः प्रभृत्ययमाचार्यो देवमनुष्यप्रपूजितः 'निम्बार्क'नाम्ना, 'निम्बार्कादित्य'नाम्ना च प्रथितो बभूव।

भगवत्कल्पोऽयमाचार्यः ऋषिप्रवरेण औडुलोमिना विरचितां वेदान्तदर्शनवृत्तिमवलम्ब्य **वेदान्तपारिजातसौरभमिति** नामकं ब्रह्मसूत्रभाष्यं रचयामास। स तत्र द्वैताद्वैतवादं भेदाभेदवादञ्च सम्यगुपपादितवान्।

ब्रह्म, चित्, अचिच्चेति त्रितत्त्ववादी आसीन्निम्बार्काचार्यः। स खलु नित्यपरिणामवादी। एतन्मते ब्रह्म जगत उपादानकारणं निमित्तकारणञ्च। जगत्पुनर्ब्रह्मणः परिणामभूतं कार्यम्। ब्रह्म खलु स्वकीयां सत्तामुपादानीकृत्य स्वेच्छाञ्च निमित्तीकृत्य दृश्यमानजगद्रूपेण परिणमति। सर्वत्रैवोपादानमोतप्रोतभावेन कार्येणान्वितं भवति। यथा उपादानं मृत्तिका घटकार्येणान्विता

भवति, घटश्च मृण्मयो भवति, एवं ब्रह्मसत्ता जगति कार्यप्रपञ्चे अनुप्रविष्टा भवति 'तत् सृष्ट्वा तदेवानुप्राविशदि'ति श्रुतेः। ब्रह्मपरिणामतया च जगद् ब्रह्मसत्तामयं भवति 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः। अतः कार्यं खलु सर्वत्रोपादानं व्यतिरिच्य नैव साध्यते। उपादानातिरिक्ता सत्ता कार्यस्य नास्तीत्यतः कार्यमुपादानात्मकं स्यात्। एतेन कारणात् कार्यमभिन्नमिति सिद्ध्यति; किन्तु कार्यं नैव कारणाद् एकान्ततोऽभिन्नम्; अपि तु तत्त्वतो बहुधा भिन्नम्। उपादानस्यैकत्वम्, कार्यस्य तु नानात्वमित्युभयोर्भेदः। उपादानेन यादृशं कार्यं निर्वहति, न तथा तत्कार्येण सम्पाद्यते। मृत्तिकया लेपनादिमात्रं भवति, घटेन तु जलानयनादिकार्यं भवति, मृत्तिकया तु न तत् सम्भवति। अतो मृत्तिकाघटादिवद् ब्रह्मप्रपञ्चयोर्भेदाभेद एव सम्बन्ध इति निम्बार्काचार्यमतम्।

अपि च आचार्यनिम्बार्कमते पूर्णदर्शी ब्रह्म सर्वज्ञं सर्वशक्तिमत्। जीवस्तु अपूर्णदर्शी, अल्पविदल्पशक्तिमान्। अतो जीवब्रह्मणोर्भेद एव सिद्धः।

किञ्च जीवः खलु ब्रह्मणोंऽशभूतः। स च मोक्षावस्थायामपि ब्रह्मणोंऽशमात्रतां नातिक्रमति। तथा च श्रुतिः—'अंशो ह्येष परस्य'। 'तत्त्वमसि' इत्यत्र च तस्य त्वमिति विग्रहः। एतेन जीवब्रह्मणोरंशांशिभाव एवोपपद्यते। अंशाशिभावस्थले अंशानां सत्यपि स्वगतभेदे अंशांशिनोरपृथक् सम्बन्धोऽभेदसम्बन्ध एव वा प्रतीयते। एतेन च जीवब्रह्मणोर्भेदाभेदसम्बन्ध एव सिद्ध्यतितराम्, जागरूकश्च द्वैताद्वैतवादः।

अयमत्र विवक्षितोऽर्थः, निम्बार्काचार्यमते ब्रह्मणोंऽशमात्रत्वाज्जगन्नैव मिथ्या। प्रत्यक्षादिप्रमाणसिद्धं जगन्मिथ्या भवितुं नार्हति। ब्रह्मणश्चिच्छक्तेरचिच्छक्तेश्च विक्षेपभूतं सृष्टं जीवजगद् जडजगच्च ब्रह्मस्वरूपमेव। अतः सत्यमेव। एवं ब्रह्म जगच्चेति तत्त्वद्वयमस्ति। तत्र परमं तत्त्वन्तु केवलमखण्डं ब्रह्म। जाग्रत्-स्वप्नसुषुप्तिसमाध्यवस्थासु बद्धो जीवः कर्मफलं सुखं दुःखं वा भुङ्क्ते। ब्रह्म तु साक्षिमात्रमन्तर्यामि भवति। भोगेन सञ्चितकर्मणां क्षयो भवति। जन्मान्तरीय-सञ्चितकर्मणां यावत् क्षयो न स्यात्, तावद् मोक्षोऽपि न स्यात्। अतो मोक्षलाभाय कर्मफलभोग आवश्यकः। तदर्थं शरीरधारणम्, जाग्रत्स्वप्नसुषुप्तिसमाध्यवस्थानां प्रयोजनम्। तस्मान्मोक्षोपयोगितया सशरीरजीवभावस्य मिथ्यात्वं नैव कल्पनीयम्। अनया दृष्ट्या वेदान्ते यथा द्वैतवादः परिगृह्यते, मोक्षसाधनब्रह्मणः परमलक्ष्यतया एकाद्वितीयत्वेन प्रतिपादनाद् अद्वैतवादोऽपि व्यवतिष्ठत इत्यतो द्वैताद्वैतवाद एवात्र दत्तप्रसरो भवति।

अपि च—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्य: पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'।।

इति मन्त्रेणापि द्वैताद्वैतवाद एव विज्ञाप्यते। तथा हि जीवात्मा परमात्मा च चैतन्याश्रयी सख्यभावापन्न: समानवृक्षाश्रयिपक्षिद्वयवत् प्रतिभाति। तत्रैको विहगो जीवात्मा मिष्टं फलं भुङ्क्ते, अन्यश्च परमात्मा पश्यत्येव केवलं न तु अत्ति। एवमत्र द्वैताद्वैतवाद एव प्रसिद्ध्यति।

अपि च आचार्यनिम्बार्कमते भक्तिरेव मुक्ते: साक्षात्साधनम्। उपासको भक्तो उपास्यभगवतो भिन्न:। तथा भक्तिसाधनायां भक्तो आत्मानं कृत्स्नं जगच्च ब्रह्मरूपेण पश्यन् भगवतोऽभिन्नो भवति। एतावतापि द्वैताद्वैतवादो भेदाभेदवादो वा प्रतिपद्यते।

अथ शङ्केत, जगतो ब्रह्मपरिणामत्वाङ्गीकारे ब्रह्मणो निर्विकारत्वहानिर्नित्यत्वहानिश्च स्यात्। एतेन च सर्वसिद्धो नित्यमोक्षवादो व्याहन्येत। अस्माद्धेतोर्जगद् ब्रह्मणो विवर्त्त एव, न तु परिणाम इत्यद्वैतिभि: स्वीकृतम्। तथा च 'अतत्त्वतोऽन्यथाभावो विवर्त्त:', 'सतत्त्वतोऽन्यथाभाव: परिणाम:, इत्युक्तम्। विवर्त्तनस्थले उपादानस्य नैव स्वरूपहानिर्भवति, परिणामस्थले तु तस्य स्वरूपहानिर्भवतीति विशेष:। यथा रज्जुसर्पादिभ्रमस्थले रज्ज्वादे: सर्पादिरूपेण विवर्त्तनाद् अध्यस्तसर्पादिगतदोषगुणैरधिष्ठानस्य रज्ज्वादेरणुमात्रमपि न सम्बन्ध:, रज्जुस्तु निर्विकारं तिष्ठति। दुग्धदध्यादिस्थलेषु दुग्धादेर्दध्यादिरूपेण परिणमनाद् दुग्धाद्युपादानस्य विकार एव भवति। अतो हि जगतो ब्रह्मपरिणामत्वाभ्युपगमे ब्रह्मणो विकारित्वमनित्यत्वञ्चापद्येते। तस्माज्जगतो ब्रह्मविवर्त्तत्वमेवाभ्युपेयम् इत्यद्वैतिनां मतम्। स्वीकर्त्तव्ये तु विवर्त्तवादपक्षे अध्यस्तस्याधिष्ठानसत्तातिरिक्तसत्ताकत्वाभावाज्जगतो रज्जुसर्पादिवद् मिथ्यात्वमेव, न तु सत्यत्वमिति द्वैताद्वैतिनां सिद्धान्तो दत्तजलाञ्जलि: प्रसज्येत इति, तत्रोच्यते सृष्टे: पूर्वं चिदचित्तत्त्वद्वयं ब्रह्मणि सूक्ष्मशक्तिद्वयरूपेणावतिष्ठते। सृष्टिकाले तु ब्रह्मण: सूक्ष्मचिदचिच्छक्तिद्वयं नामरूपविशिष्टस्थूलजीवजडजगत्प्रपञ्चाकारेण परिणमति। ब्रह्म स्वसत्ताया अंशविशेषमेव जगद्रूपेण परिणमयति। ब्रह्मसत्ता खल्वेकाखण्डरूपा। सा च निर्विकारा। ब्रह्मणो जगत्सृष्टिकार्यमूर्णनाभेस्तन्तुवयनकार्येण तुलयितुमलम्। तथा च श्रुतिर्वर्णयति—

यथोर्णनाभि: सृजते गृह्णते च
तथाक्षरात् सम्भवतीति विश्वम्।।

तन्तुस्रष्टा ऊर्णनाभो यथा स्वयं तन्तुरूपेण न परिणमति; किन्तु स्वसत्तया तन्तुं रचयति, तेन चोर्णनाभस्य न कश्चिद् विकारः, तथैव जगत्स्रष्टा ब्रह्म स्वयमपरिणतमपि स्वसत्तया जगदुत्पादयति। एतेन स्वीकृतेऽपि परिणामवादे ब्रह्मणो न कोऽपि विकार आपद्यते।

एतदुक्तं भवति—कार्यस्य कारणपरिणामो द्विधा सम्पद्यते—(१) कुत्रचित् कारणम् (उपादानं) कार्यरूपेण परिणतं (परिवर्त्तितं) भवति। यथा मृत्तिका घटरूपेण परिणमति, दुग्धञ्च दधिरूपेण। (२) कुत्रचित् पुनः कारणम् (उपादानं) स्वयमपरिणतम् (अविकृतं) भूत्वा कार्यं घटयति। यथा ऊर्णनाभस्तन्तुरूपेण न परिणतो भवति, तथापि स्वसत्तया तन्तुं सृजति। एवं ब्रह्म अपि जगद्रूपेण नैव परिणमति, तथापि स्वसत्तया जगत् सृजति। अतः कार्योत्पत्तावुपादानकारणस्य कार्यरूपेण परिणतिर्नात्यन्तमुपयुज्यते। कार्योत्पादकशक्तिविशिष्टमेव कारणं परिणतम् (विकृतम्), अपरिणतम् (अविकृतं) वा कार्यमुत्पादयति। तस्मात् कार्योत्पादकशक्तिविशिष्टत्वमेव परिणाम्युपादानकारणत्वस्य प्रयोजकत्वं बोध्यम्। एतेन तावद् द्वैताद्वैतवादिनां नित्यपरिणामवाद उपपद्यतेतराम्। ततश्च ब्रह्मणो नित्यत्वनिर्विकारत्वे यथा सङ्गच्छेते, तथा तस्य नित्यचिदचिच्छक्तिविक्षेपभूतत्वाद् जीवजगतो जडजगतश्च नित्यत्वसत्यत्वे उपपद्येते। अथ शङ्केत, जीवो जगच्च यदि ब्रह्मातिरिक्तं नित्यतत्त्वद्वयं स्यात्, तर्हि ब्रह्म एकमेवाद्वितीयमिति शास्त्रवचनं कथमुपपन्नं भवति? तत्रोच्यते, जीवस्य जगतश्च यद्यपि नित्यत्वम्, तथापि न ब्रह्मव्यतिरिक्तत्वम्। शक्तिरूपेण कार्यरूपेण चोभयोर्ब्रह्माश्रयित्वमेव, न तु ब्रह्मभिन्नद्वितीयत्वम्। अतो यथार्थमाम्नातम् 'एकमेवाद्वितीयमि'ति।

पुनरन्या शङ्का जागर्ति, 'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायेन उपादानकारणेन सह कार्यस्य सालक्षण्यमेव विवक्षितम्। मृत्तिका एव हि घटस्योपादानम्, सालक्षण्यात्। न तु वालुका, वैलक्षण्यात्। परन्तु नित्यशुद्धचेतनब्रह्मणो नित्याशुद्धाचेतनप्रपञ्चेन सालक्षण्यं नास्ति, अतः कथं ब्रह्म जगत उपादानं भवति? अत्रोच्यते—उपादानकार्ययोरेकान्ततः सालक्षण्यं नेष्टम्, किञ्चिद्वैलक्षण्यमप्यादर्त्तव्यम्। अन्यथा चेतनपुरुषात् कथमचेतननखकेशादेरुत्पत्तिः? अचेतनगोमयाच्च कथं चेतनवृश्चिकोत्पत्तिः। रसायनशास्त्रेऽपि दृश्यते, 'आक्सीजेन'-'हाइड्रोजेन'-नामकवायवीयपदार्थद्वयस्य मिश्रणेन जलस्योत्पत्तिः; किन्तु जलगतस्नेहादिगुणा उक्तपदार्थद्वये पृथक्तया न सन्ति। अपि च बीजाद् वृक्षस्योत्पत्तिर्भवति। वृक्षो मूलकाण्डशाखापत्रपुष्पफलविशिष्टः; किन्तु तादृशधर्मसालक्षण्यं बीजे नास्ति। एवं दुग्धस्य तरलत्वानम्लत्वधर्मास्तत्कार्यभूते

दध्नि न सन्ति, दध्नि घनत्वाम्लत्वधर्मा: सन्ति। तैलस्य तरलत्वम्, सर्षपस्य तु कठिनत्वम्। अतो वैलक्षण्यसत्त्वेऽपि सर्षपादीनां तैलादेरुपादानत्वं यथा सम्भवति, एवं वैलक्षण्येऽपि ब्रह्मणो जगदुपादानत्वं कथं न सिद्ध्येत्?

अत एव कार्येण सह परिणाम्युपादानस्य न समस्वभावत्वमिष्टम्। अन्यथा कार्यकारणव्यपदेशभेदोऽपि लुप्येत; किन्तु सर्वत्रोपादानोपादेयभावस्थले किञ्चिद्वैलक्षण्येऽपि किञ्चित् सालक्षण्यमप्यनुसन्धेयम्। जगदस्ति, भाति, प्रियमिति लोकव्यवहाराज्जगतो यत् सच्चिदानन्दमयत्वं तदेव ब्रह्मसालक्षण्यम्। जगतो नामरूपव्याकृतानित्यत्वादिकं तु ब्रह्मवैलक्षण्यम्। एवं सर्वत्रानुसन्धेयम्। अत: कार्यकारणयो: सर्वत्र भेदाभेदसम्बन्ध एव स्वीकर्त्तव्य:। एतेन द्वैताद्वैतवाद एव प्रतितिष्ठतितराम्। तदुक्तं निम्बार्काचार्येण—

'नानाव्यपदेशाद् भेदव्यपदेशात्। अन्यथा च। अभेदव्यपदेशाच्च। इत्युभयविधवाक्यानां तुल्यबलत्वाज्जीवपरमात्मनो: स्वाभाविकौ भेदाभेदौ भवत:'।

भक्तिवादी दार्शनिकप्रवरो निम्बार्काचार्य:। भगवति श्रीकृष्णे अव्यभिचारिणीं भक्तिमादधत एव मृत्योरतिक्रमो भवतीति वल्लभाचार्यभास्कराचार्यादिवद् वैष्णववैदान्तिकस्य निम्बार्काचार्यस्य मतमवश्यमवगन्तव्यम्। तच्च सुष्ठ्वभिहितं भगवता जगद्धिताय श्रीमद्भागवते। भगवद्भक्तिरेव प्रेमलक्षणा भागवतोक्त: परमो धर्म:। दु:खमय-भवबन्धनजरामरणजर्जरिता जीवा:। दु:खार्णवनिपतितानामेषां समुत्तरणाय यद्यप्याचार्यवर्य्यैर्बहव: पन्थानो निगदिता:, यथा—कर्मयोगभक्तिज्ञानादीनां मार्गास्तथापि भक्तिरेव सहजतमतया सर्वत: प्रकृष्टो मार्ग इति विवेचनीय:। कलावन्नगतप्राणैर्जीवै: श्रीमद्भगवद्गीतोक्ता: कर्मयोगा-हिंसाद्यष्टाङ्गयोगज्ञानयोगाश्चातीव दुरूहतया न कथमप्यवलम्बितुं शक्यन्ते; किन्त्वापेक्षिकसुगमतया भक्तियोग एव सर्वैर्मुमुक्षुभिर्वरणीय इति निर्विवादमुच्यते।

अत्र वक्तव्यम्, निष्कामकर्मसाधना, यमनियमाद्यष्टाङ्गयोगोपासना, निर्गुणब्रह्मभावना, परमेश्वरभजना च त्रितापदग्धभवबन्धननाशस्य हेतुतया मोक्षसाधनानि स्यु:। अतश्चत्वार एव निवृत्तिमार्गा: शास्त्रकृद्भि: प्रेक्षावद्भि: परिगृहीता:। अधिकारानुसारमेत एव मार्गा: स्थिरीकृता:। तत्तदधिकारिणां कृते हि सर्वे मार्गा उपयुज्यन्ते। वस्तुतस्तु चत्वारो मार्गा अन्योन्यसापेक्षा अन्योन्यपरिपूरकाश्च, न तु ते मिथो विरुद्धा:। अनन्यां भक्तिमन्तरेण न निष्कामकर्मसाधना सफलीभवति, न च तां विना यमनियमाद्यष्टाङ्गयोगोपासना तथा निर्गुणब्रह्मविचारणा च सम्भाव्येते। अत: सर्वत्रोपयोगिनी भक्ति:। भक्तिरेव हि

मुक्तये परमा गतिः। तथैव निष्कामकर्मसाधनां विना, अष्टाङ्गोपासनञ्च विना भगवति शुद्धा भक्तिर्न सम्भवेत्, तथा ज्ञानस्य पराकाष्ठापि च न लभ्यते। एवं तत्त्वज्ञानमप्यन्तरेण कर्मयोगः, अष्टाङ्गयोगः, भक्तियोगश्च कथमपि नैव सम्पद्येरन्। अतः सर्वे मार्गा एकार्थोपयोगितया मोक्षपरा भवन्तीत्यत्र नास्ति संशयलेशोऽपि। एषु कश्चिदुत्कृष्टः कश्चिच्च निकृष्ट इति न कदापि विभावनीयः। यद्यप्याचार्यैः स्वस्वभाष्येषु चतुर्षु एकस्यैव प्राधान्यं प्रकटीकृतम्, तथापि तत्तदधिकारिविशेषाणां कृते सा सा व्यवस्था वेदनीया। नास्ति वस्तुतो आचार्याणां मध्ये कोऽपि विरोधः, सत्यपि स्थूलमतीनां तत्र विरोधाभासे यथोक्तदिशा सूक्ष्मदृष्टिभिः समन्वयः कर्त्तव्य इति तत्त्वविदां परामर्शः। न केवलं मुक्तये, भुक्तये च भक्तेरनन्योपयोगोऽस्ति। शरणागतस्य भक्तस्येश्वरानुग्रहादेव दुर्गतिनाशाद्यसाध्यसाधनं भवति, तथा तत्कृपयैव धनसम्पदादिलौकिकाभ्युदयलाभः, तद्रक्षणसमृद्धिरपि च भवति। तदुक्तं भगवता गीतायाम्—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।८।२२।।

सम्प्रति हिंसाद्वेषविच्छिन्नताऽसंहतिप्रपीडिते समाजे सर्वेष्वेव मैत्रीसंहतिस्थापनाय भक्तिवादिनां निम्बार्काचार्यप्रमुखाणां वैष्णववैदान्तिकदार्शनिकानां द्वैताद्वैतसिद्धान्तालोचनस्य महत्युपयोगिता विद्यते। आध्यात्मिकीं भक्तिसाधनां विना दृढमूलविच्छिन्नतायाः समूलमुत्पाटनं न सम्भवति। तथा हि साम्प्रतिकविच्छिन्नताया दूरीकरणाय अस्माभिर्व्यक्तिसत्ताया विश्वसत्तायामुन्नयनं कर्त्तव्यम्। अतो हि भागवते उत्तमभक्तस्य स्वरूपनिरूपणावसरे यथायथमुक्तम्—

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः।।

सर्वजीवेषु स्वाभिन्नत्वद्रष्टुरेव मित्रामित्रेषु सर्वत्र समदर्शिन एव वा भागवतोत्तमभक्तत्वं निरूपितमत्र भगवता व्यासदेवेन। तदेवं भक्तिमार्गावलम्बनेनैव व्यक्तिसत्ताया विश्वसत्तायां समुन्नयनं भवतु, भवतु च विश्वप्रेम, विश्वशान्तिश्च।

अपि च सर्वेषु जीवेषु भगवत ईश्वरस्य नित्यमधिष्ठानम्। अतः 'मा हिंस्यात् सर्वा भूतानि' इति श्रुतेः प्राणिहिंसा न कर्त्तव्या; किन्तु सर्वेष्वेव प्राणिषु निःस्वार्था प्रेमानुरक्तिरेवाधेया। स्त्रीपुत्रकन्यादिजीवसेवा आसक्तिफलाकाङ्क्षाशून्या सती ईश्वरसेवायां घनीभूतप्रेमलक्षणभक्तिरूपायां पर्यवसिता भवतु। अनया भक्तिभावनया

विनश्यति स्वार्थबुद्धिः, जागर्त्ति च पुनः परार्थबुद्धिः। एवं स्वपरभेदभावना खलु सर्वथा दूरीभवति। तथा चोक्तम्—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम्।।

'सर्वे प्राणिनोऽमृतस्यैव सन्तानाः'। 'शृण्वन्तु विश्वे अमृतस्य पुत्राः', इति श्रुतीः। अतः सर्वेषां मध्ये मिथः सौभ्रातृत्वमेव सम्पर्कः। सर्वेषु समदर्शिताबुद्धेः प्रतिपादकानि अजस्राणि निदर्शनानि विलसन्ति गीताभागवतोपनिषदादिषु। अत्र खलु प्रकृतसाम्यवाद एव प्रसरति। नास्त्यत्र सन्त्रासवादस्य विच्छिन्नतावादस्य मौलसाम्प्रदायिकतावादस्य च कोऽप्यवकाशः। अतो विश्वजनीनसार्वभौम-भागवतभक्तिधर्म एव परमो धर्मः। भक्तिं विना प्रकृतं ज्ञानमपि न सम्भवति। अनन्या भक्तिरेव हि भगवद्दर्शनरूपज्ञानं तद्रूपताप्राप्तिञ्च साधयति। अतस्तत्त्वज्ञानावसाना भक्तिस्तत्सायुज्यापत्तिरूपा वेति मन्यते बुधैः। तथा चोवाच भगवान् गीतायाम्—

भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप।।

अतः सर्वोत्कृष्टसाधनैव भक्तिसाधना। अनया साधनया यथा यथोक्तदिशा समाजकल्याणादिसार्वजनीनजागतिकोऽभ्युदयो भवति, तथा सकलप्रेक्षावदाराध्य-निःश्रेयसरूपपारमार्थिकसुखञ्च भवति। भक्तिरेव हि मुक्तेः साक्षात् साधनमिति भूयोभूय उपदिष्टं स्वयमेव भगवता गीतायाम्—

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्।।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।

श्रवणादिभिर्भगवद्धर्मैर्द्रवीभूतस्य चित्तस्य तैलधारावन्निरवच्छिन्ना भगवदाकारा वृत्तिरेव भक्तिरिति कथ्यते। भक्तिरसायनेऽप्युच्यते महामतिना मधुसूदन-सरस्वतीपादेन—

द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते।।

प्रेमाभक्तेः साधनभूते श्रवणादिनवधाभक्तिविषये प्रकथितं श्रीमद्भागवते—

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।

त्रिविधा भक्तिरस्ति। आद्या साधनभक्तिर्वैधीभक्तिः, रागभक्तिर्वा। द्वितीया सिद्धभक्तिः, पराभक्तिर्वा। तृतीया चात्यन्तिकीभक्तिः, विशुद्धाभक्तिर्वा।

श्रवणकीर्त्तनादिवैधभक्त्या भगवत्यनुरागो जायते। प्रेमाभक्तेः साधनतया इयं खलु साधनभक्तिरित्युच्यते। प्रेमाभक्तेरेकादशभूमयश्च भागवते भक्तिरसायने च यथा सुष्ठु प्रतिपादिताः, तदनुसारं सारसङ्क्षेपतः किञ्चिदत्र विवक्षुरस्मि।

अत्र भक्तेः प्रथमा भूमिर्भक्तभगवन्महापुरुषयोः सेवा। द्वितीया भूमिः खलु एतादृशमहापुरुषयोः कृपालाभः। तृतीया भूमिः श्रवणकीर्त्तनादिभगवद्धर्मे स्पृहा। चतुर्थी भूमिः श्रवणादिना भगवत्यनुरागः प्रेमलक्षणः। पञ्चमी भूमिः पुनः पुनः प्रेमाभ्यासेन विगलितचित्ते भगवत्तत्त्वानुभवः। इयमेव तु रत्यङ्कुराख्या प्रेमलक्षणा भक्तिः। षष्ठी भूमिस्तावज्जीवस्य निश्चयात्मकः स्वस्वरूपापरोक्षानुभवः। सप्तमी भूमिश्च अनात्मवस्तुनि समुपजाते वैराग्ये परमेश्वरे तीव्रभक्तिप्रवाहः।

एतावत्पर्यन्ता भक्तेः साधनभूमयः प्रकटीकृताः। अष्टमादिभूमयस्तु सिद्धा भूमयः। एताः पूर्वतः प्रकृष्टाः, अतः परा इत्युच्यन्ते। अपृथक्प्रयत्नसिद्धा एता भूमयः।

अष्टम्यां भूमौ प्रयत्नव्यतिरेकेणापि भक्तेः क्रमपरिपाकवशाद् अनुक्षणमतितीव्रभक्तिप्रवाहश्चलति। प्रह्लादवत्तस्य भगवद्दर्शनं भवति। नवम्यां भूमौ भगवद्दर्शनजन्या महाप्रभुभगवच्चैतन्यदेवादिवत् तन्मयताप्राप्तिर्भवति। सदा भगवद्भावभावितं चित्तं भवति। दशम्यां भूमौ भगवतोऽणिमाद्यैश्वर्याणामाविर्भावः। भक्तेरेकादश्यां भूमौ प्राणपरित्यागात् पूर्वपर्यन्तं भगवद्विरहासहिष्णुतारूपप्रेम्णः पराकाष्ठा।

अथ साधनभक्तेस्तथा सिद्धभक्तेरपि चाधिकोच्चकोटिका परमोत्कृष्टा स्वाभाविकी शुद्धा 'आत्यन्तिकी' भक्तिरस्ति। अभिहितञ्च श्रीमद्भागवते—

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमच्युत।।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः।
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः।। (३.१९.१२-१३)

भागवतोक्तदिशा लक्षित: परमभक्त: सर्वकामविनिर्मुक्त एव भवति। सालोक्य-सार्ष्टि-सामीप्य-सारूप्यरूपमुक्तिकामनापि तस्य चित्ते न भवति। केवला भगवति नि:स्वार्था शुद्धा भक्तिरेवास्ति।

इदन्त्ववधेयम्, भक्तिसाधनायां विषयवैतृष्ण्यमेकान्तत एवापेक्ष्यते। नात्र कर्मकाण्डीयवेदोक्तप्रवृत्तिलक्षणभोगधर्मस्यावसर:। केवलं भगवत्प्रीत्यर्थमीश्वरे सर्वकर्मसमर्पणरूप: शुद्धसात्त्विकनिष्कामनिवृत्तिलक्षणभक्तिधर्म:। तत्त्वदृष्ट्या 'ग्रामकामो यजेत', 'पुत्रकामो यजेत', 'स्वर्गकामो यजेत' इत्यादिवाक्यानां नैव सकामकर्मप्रतिपादने तात्पर्यम्; किन्तु शास्त्रेषु रुचिसम्पादनार्थमेव तेषां तथोपदेशद्वारा निष्कामकर्मसाधनायामेव परमं तात्पर्यमङ्गीकर्त्तव्यमित्येव भगवतो वेदव्यासस्य वक्तव्यमवितथमेवाभिव्यक्तं भागवते—'रोचनार्था फलश्रुति:' इति। धनैश्वर्यादिभोगातिशय्यमीश्वराभिमुखितां व्युदस्ति, इत्यतोऽपरिहार्यग्रासाच्छनादि-प्रयोजनातिरिक्तस्य भोग्यविषयस्य लोभ: शास्त्रे भूयो भूय एव निन्दित:। विषयवैराग्यं विना परमा शान्तिर्न लभ्यते। तथा च श्रुतिस्मृतय:—

'तेन त्यक्तेन भुञ्जीथा मा गृध: कस्यस्विद् धनम्'।
'येनाहं नामृता: स्याम् किमहं तेन कुर्याम्'।
'न कर्मणा न प्रजया धनेन त्यागेनैक अमृतत्वमानशु:'।
'त्यागाच्छान्तिरनन्तरम्'।

समाजबद्धो जीव:। समाजस्य ऋणस्य परिशोधनाय प्रयोजनस्याधिकमर्थं दरिद्रेभ्य: प्रयच्छेत्, अन्यथा स धनापहर्त्ता 'चौर' इत्यतो निन्दनीय: स्यात्। तस्माद् बलवती विषयस्पृहा वर्जनीया इत्यत उक्तं भागवते—

यावद् भ्रियेत जठरं तावत् सत्त्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति।।

तदेवमैकान्तिकी भक्तिसाधना खलु विषयाच्चित्तं विमुखीकृत्य तत्र च ईश्वरोन्मुखितां सम्पाद्य परां शान्तिं जनयति, अमृतत्वञ्च ध्रुवं प्रापयति।

किं बहुना, ईश्वरे तत्त्वोपदेशके गुरौ च यस्य चित्ते परा भक्तिर्विराजते, ब्रह्मविद्याविषयिणी आध्यात्मिकी तत्त्वकथा तस्यैव कृते उपदिश्यते। तत: स्वयमाह श्वेताश्वतरोपनिषत्—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्था: प्रकाशन्ते महात्मन:।। (६.२३)

बलात्करणेन बहुशतोपदेशदानेन वा तत्त्वविद्यालाभो न भवति, न च हृदये भक्तिभावः समुदेति, न वा सन्न्यासः सम्पद्यते; किन्तु यस्य तावन्मुमुक्षोः प्रत्यक्प्रवणताबुद्धिः, चेतसि भगवन्मुखिता च विद्येते, तस्यैव खलु सन्न्यास-तत्त्वबोधभक्तिभावाः स्वतः स्फूर्त्ततया विराजन्ते। ईश्वरानुग्रहं विना तत् किमपि न सिध्यति। ईश्वरानुग्रहलाभाय च भक्तिरेव कक्षीकरणीया। तथा चाम्नातं कठोपनिषदि—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्।।

अपि च 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना'। एतावता सर्वेष्वेवाचार्याणां सिद्धान्तेषु भक्तिवाद एव तिलेषु तैलवत् सुप्रतिष्ठित एवेति सर्वमनवद्यमिति।



# पूर्वमीमांसादर्शने प्रमाणमीमांसा

**डॉ. कपिलदेवपाण्डेयः**
वाराणसीस्थः

***

धर्मः खलु पूर्वमीमांसादर्शनस्य मुख्यतया मीमांस्यो विषयः। यथोक्तं जैमिनिना द्वादशलक्षण्यां प्रथमं सूत्रम् 'अथातो धर्मजिज्ञासा' इति। ततश्च 'चोदनालक्षणोऽर्थो धर्मः' इति द्वितीयेन सूत्रेण धर्मस्य ज्ञानं चोदनानिमित्तकमिति प्रतिपादितम्। तद् युक्तिभिः साधयितुं 'तस्य निमित्तपरीष्टिः' इति सूत्रं प्रवर्तते। धर्मस्य ज्ञानं प्रत्यक्षादिप्रमाणैर्न शक्यम्, केवलं 'वेद' एव तत्र प्रमाणमित्युद्दिश्य अन्यानि प्रमाणानि शास्त्रकारैः परीक्षितानि। अस्मिन्नेव प्रसङ्गे पूर्वमीमांसाशास्त्रे प्रमाणविचारः प्रवर्तते।

दर्शनेषु प्रमाणप्रमेययोः परस्पराश्रितः सम्बन्धः। प्रमेयानां सिद्धिः प्रमाणाश्रिता, 'प्रमेयसिद्धिः प्रमाणाद्धि' इति न्यायात्। प्रमाणसिद्धान्येव प्रमेया-न्यभ्युपेयानि। प्रमेयानुसारमेव प्रतिदर्शनं प्रमाणान्यभिमतानि। यथा चार्वाकमते न कोऽप्येवं प्रमेयभूतः पदार्थो यत्संसिद्ध्यै प्रत्यक्षेतराणां प्रमाणानामावश्यकता अपेक्षा वा अनुभूयेत। अतः प्रत्यक्षमेव एकमात्रं प्रमाणं चार्वाकमतेऽभिमतम्। इयमेव स्थितिः सर्वेषां दर्शनानाम्। यथोक्तं मानमेयोदये—

चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ
भासर्वज्ञश्च सांख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति।
प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः
षट्कं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात्।।

यथा नैयायिकमते 'प्रमाकरणं प्रमाणम्', तथा मीमांसका अपि प्रमाकरणमेव प्रमाणं मन्यन्ते। 'यथार्थानुभवः प्रमा' इत्यत्राप्युभयोः साम्यम्; किन्तु 'अज्ञाततत्त्वार्थज्ञानं प्रमा' इति मन्वानैर्मीमांसकैरज्ञातपदेन स्मृतिसंशयादिभिः सह अनुवादोऽपि निरस्यते। यतो हि अनुवादोऽर्थनिर्णये व्यवहारे वा पूर्वज्ञानापेक्षया

किमपि वैशिष्ट्यं न भजते। अतस्तस्य स्वीकारो निष्फलः। 'अयं घटः', 'अयं घटः' इति धारावाहिकज्ञानेषु द्वितीयादीनां ज्ञानानामप्रमात्वं न शङ्क्यम्, कालांशभेदात्। उत्तरे क्षणे घटसद्भावः पूर्वक्षणज्ञानेन अनधिगत एव। तथा चोक्तं मानमेयोदये—'अज्ञाततत्त्वार्थज्ञानं प्रमा' इति। अयथार्थज्ञानस्याभावात् प्रभाकरमतानुयायिनो मीमांसका अत्र 'तत्त्व'पदस्य प्रयोगं निरर्थकं मन्यन्ते। प्रभाकरमतानुसारेण अनुभूतीनां प्रामाण्यम्, स्मृतीनाञ्च अप्रामाण्यम्। यथा चोक्तं प्रकरणपञ्चिकायाम्—

प्रमाणमनुभूतिः सा स्मृतिरन्या न सा स्मृतिः।
न प्रमाणं स्मृतिः पूर्वप्रतिपत्तिव्यपेक्षणात्।।

भाट्टमतेन त्वन्यथाग्रहणरूपभ्रमादिज्ञाननिरासार्थं तत्त्वपदम्। अतोऽज्ञाततत्त्वादवगमरूपायाः प्रमायाः करणं प्रमाणम्। 'प्रमाण'शब्दः द्विधा व्युत्पाद्यते—'प्रमीयते ज्ञायते अनेन' इति, 'प्रमीयते यत्' इति च। द्वितीयव्युत्पत्त्या—'अविसंवादिविज्ञानं प्रमाणम्'। अविसंवादित्वं 'क्रियाकारित्वम्' इति बौद्धानां मतम्। भूतभविष्यद्विषयस्यानुमानस्य अर्थक्रियाकारित्वाभावादप्रामाण्यं प्रसज्येत, स्मृतेश्च क्वचिदर्थक्रियाकारित्वात् प्रामाण्यं जायेत। भाट्टमतानुसारेण तु यस्मिन् ज्ञानेऽज्ञाततत्त्वस्यानुभवो भवेत्, अन्यज्ञानेन बाधा न स्यात्, दोषराहित्यं च स्यात्, तदेव प्रमाणम्। यथोक्तं शास्त्रदीपिकायाम्—

'कारणदोषबाधकज्ञानरहितमगृहीतग्राहिज्ञानं प्रमाणम्'।

प्रथमव्युत्पत्त्या तु—'अज्ञाततत्त्वार्थज्ञानसाधनमेव प्रमाणम्'। प्रत्यक्षम्, अनुमानम्, शाब्दः, उपमानम्, अर्थापत्तिः, अनुपलब्धिः (अभावो वा) इति षट् प्रमाणानि भाट्टमतेन। प्राभाकरास्त्वभावं प्रमाणत्वेन न स्वीकुर्वन्ति। अतस्तेषां मतेन पञ्चैव प्रमाणानि।

## प्रत्यक्षम्

सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्। अत्र शाबरभाष्यम्—'सतीन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते तत्प्रत्यक्षम्'। तथा चेन्द्रियाणामर्थेन सह सम्बन्धे विद्यमाने सति यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षम्। भविष्यद् भूतो वार्थो न ज्ञानकालेऽस्ति, अतः सत एव एतदुपलम्भनं नासतः। अतः प्रत्यक्षं प्रमाणं धर्मे न निमित्तम्। विद्यमानेन घटेन सह चक्षुःसंयोगे सत्येव घटज्ञानं भवति। तदेव प्रत्यक्षम्। शुक्तौ यद् रजतज्ञानं भवति, तत्र शुक्तेरविद्यमानत्वाद् इन्द्रियसंयोगाभावः।

अतस्तज्ज्ञानं न प्रत्यक्षम्, अपि तु भ्रमः। चक्षुः, रसनम्, घ्राणम्, स्पर्शनम्, श्रोत्रम्, मनश्चेति षडिन्द्रियाणि। तैजसं चक्षू रूपज्ञाने निमित्तम्, रसनं रसज्ञाने, घ्राणं गन्धज्ञाने, त्वगिन्द्रियं स्पर्शनं स्पर्शज्ञाने, शब्दज्ञाने श्रोत्रम्। चक्षुः तैजसम्, रसनं जलीयम्, घ्राणं पार्थिवम्, स्पर्शनं वायवीयम्। अत्र चतुर्षु भूतात्मकत्वं दृश्यते, अतोऽवशिष्टेन श्रोत्रेन्द्रियेण भूतात्मकेनैव भाव्यम्। नैयायिकास्तु शब्दस्य आकाशगुणत्वं साधयन्ति, तन्नोचितम्, शब्दस्य गुणत्वासिद्धेः।

मनस्तु सुखाद्युपलब्धिसाधनमिन्द्रियम्। विभुत्वे सत्यपि शरीरावच्छिन्नस्यैव मनसः प्रवृत्तिः। रूपादिज्ञानेषु चक्षुरादीनामपि परतन्त्रा प्रवृत्तिः। चक्षुःश्रोत्रयोरपि त्वगादिवत् प्राप्यकारित्वमभ्युपगन्तव्यम्, तयोर्बहिरिन्द्रियत्वात्। चक्षुरादीनि इन्द्रियाणि न प्रत्यक्षग्राह्याणि, अनुद्भूतरूपस्पर्शवत्त्वात्।

न्यायवैशेषिकमते षोढा इन्द्रियार्थसन्निकर्षः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्च। परन्तु भाट्टमतानुसारेण तु सन्निकर्षो द्विविधः—संयोगः, संयुक्ततादात्म्यं च। पृथिवी-जल-तेजसां चक्षुस्त्वगिन्द्रियाभ्यां संयोगाद् ग्रहणं भवति। वायोः त्वक्संयोगात्, शब्दस्य श्रोत्रसंयोगात्, आत्मनो मनःसंयोगाच्च। कालस्य सर्वैरपीन्द्रियैः संयोगाद् ग्रहणम्। चक्षुरादिसंयुक्तेषु पृथिव्यादिषु तदात्मभूतानां जातिगुणकर्मणां ग्रहणं संयुक्ततादात्म्य-सन्निकर्षात्। जातिगुणकर्मगतानां सत्तारूपत्वकर्मत्वादीनां ग्रहणे परम्परया तादात्म्यसम्भवात् संयुक्ततादात्म्यसन्निकर्षादेव। यथा नैयायिका रूपत्वादिग्रहणाय संयुक्तसमवेतसमवायमाश्रयन्ते, तथा भाट्टा अपि संयुक्ततादात्म्यतादात्म्यं नाम तृतीयं सन्निकर्षमाश्रयेयुरिति भाट्टमते द्वेधा त्रेधा वा सन्निकर्षः। शब्दस्य श्रोत्रगुणत्वाभावात् समवायसन्निकर्षः समवेतसमवायसन्निकर्षश्च निरवकाशः। प्रभाकरमतानुसारेण तु संयोगः, संयुक्तसमवायः, समवाय इति त्रेधा सन्निकर्षः। रूपत्वादीनामभावात् संयुक्तसमवेतसमवायो नाश्रयणीयः, शब्दत्वस्याभावात् समवेतसमवायोऽपि न। अभावस्याभावाद् विशेषणविशेष्यभावोऽपि नाश्रयणीयः।

जैमिनिकृते प्रत्यक्षलक्षणे अव्यापकत्वदोषमाक्षिप्य प्रभाकरस्तदलक्षणं मत्वा न स्वीचकार। प्रभाकरमतानुसारेण तु 'साक्षात्प्रतीतिः प्रत्यक्षम्'। प्रत्यक्षज्ञाने मेय-मातृ-प्रमाः' इति त्रितयमपि भवति। 'घटमहं जानामि' इत्यत्र 'घटः' 'अहम्' 'ज्ञानम्' इति त्रयाणां युगपद् भानं भवति। इदमेव त्रिपुटीप्रत्यक्षमुच्यते। 'प्रमा' स्वयंप्रकाशस्वरूपाऽस्ति। तस्याः प्रतीतिः स्वयं भवति। अत एव सुषुप्तौ मेयमात्रोः प्रकाशो न भवति, स्वयंप्रकाशाभावात् तयोः। इन्द्रियार्थयोः साक्षात्सम्बन्धेन प्रत्यक्षज्ञानं भवति।

भाट्टप्राभाकरयोरुभयोर्मतेन प्रत्यक्षज्ञानं द्विविधं भवति—निर्विकल्पकं सविकल्पकञ्चेति। तत्र इन्द्रियार्थसन्निकर्षानन्तरमेव द्रव्यादिस्वरूपमात्रावगाहि-शब्दानुगमशून्यं यत्सम्मुग्धज्ञानं जायते तद् विशिष्टकल्पनाभावान्निर्विकल्पकमुच्यते। यत्तु निर्विकल्पकज्ञानानन्तरं शब्दस्मरणसहकृतं जात्यादिविशिष्टवस्तुविषयं रक्तोऽयं घटोऽयमित्यादि-व्यक्तं ज्ञानं तत्सविकल्पकम्। शाब्दिकानां मते निर्विकल्पकं ज्ञानं न भवति। तेषां मतेन—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते'। मीमांसकमते तन्नोचितं पूर्वमर्थदर्शनाभावे शब्दस्मरणस्य हेत्वभावप्रसङ्गात्। बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षं स्वीकृत्य सविकल्पकस्य प्रत्यक्षप्रमाणत्वं निषेधन्ति। तदपि नोचितम्, तस्य प्रत्यक्षरूपेण लोकसिद्धस्य निषेधे लोकविरोधात्। सविकल्पकानन्तरमेव प्रत्यक्षीकृते वस्तुन्यर्थक्रियाकारित्वं सम्भवति। प्रत्यक्षस्या-र्थक्रियाकारित्वरूपं लक्षणं नापलपितुं शक्यते। बौद्धमतानुसारेण सविकल्पकस्य प्रत्यक्षत्वं न स्वीकर्तुं शक्यते, तत्रानधिगतार्थत्वाभावाद् अक्षजत्वाभावाच्च। निर्विकल्पकेन स्वरूपमात्रस्य ग्रहणं कार्यते। तदेव बौद्धनये 'स्वलक्षणम्' इत्युच्यते—'भावानामन्यासाधारणमात्मीयं यत्स्वरूपं तत्स्वलक्षणम्' इति प्रसन्नपदायां चन्द्र-कीर्तिः। सविकल्पकं प्रत्यक्षं निषेषं कुर्वन् बौद्धाचार्यो निर्विकल्पकं विविनक्ति—

'कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्'।

सविकल्पकेन प्रत्यक्षेण द्रव्य-जाति-गुण-कर्म-नामभिः पञ्चधा विकल्पो भवति। यथा—वेणुमानय, गोपोऽयम्, श्यामोयम्, गायत्ययम्, गोविन्दोऽयमिति च। प्रत्यभिज्ञाप्रत्यक्षमपि षष्ठो विकल्प इति केचित्, तन्न, नामकल्पनायां तस्या-न्तर्भावात्। प्रत्यक्षज्ञानेषु विवक्षाभेदेनेन्द्रियस्य तत्सन्निकर्षस्य ज्ञानस्य वा करणत्वं भवति। अतः सिद्धम्—इन्द्रियसन्निकर्षजं ज्ञानं प्रत्यक्षमिति।

योगिज्ञाने ईश्वरज्ञाने चाभिमतावलौकिकसन्निकर्षौ मीमांसकैरालोचितौ खण्डितौ च प्रत्यक्षस्य विद्यमानोपलम्भनियमात्। सामान्यलक्षण-ज्ञानलक्षण-योगजसन्निकर्षेषु विषयस्य परोक्षत्वाच्च। एवंप्रकारेण प्रतिपादितं प्रत्यक्षप्रमाणमनिमित्तं धर्मेऽधर्मे च, तत्रेन्द्रियैः सह सत्सम्प्रयोगाभावात्। प्रत्यक्षपूर्वकत्वाद् अनुमानोप-मानार्थापत्तीनामप्यकारणत्वम्।

## अनुमानम्

मानमेयोदयानुसारेण व्याप्यदर्शनाद् असन्निकृष्टार्थज्ञानमनुमानम्। यथा वर्तते धूमवत्त्वदर्शनाद् अग्निमत्त्वज्ञानम्। व्याप्यत्वं चात्र अल्पदेशवृत्तित्वम्। अधिकदेशवृत्तित्वं व्यापकत्वम्। धूमो व्याप्यः, वह्निश्च व्यापकः। धूमो वह्नेरन्यत्र न

वर्तते, वह्निश्च धूमादन्यत्र वर्तते, यथा तप्तायोगोलके। अतोऽग्निधूमयोर्व्याप्तिः। इयं विषमव्याप्तिरित्युच्यते। क्वचित् समव्याप्तिरपि भवति यथा कृतकत्वानित्ययोः। स्वाभाविकोऽव्यभिचरितसम्बन्धो व्याप्तिः। अत्रोपाधिरहितत्वमेव स्वाभाविकत्वम्। प्राभाकरमतानुसारेण तु धूमस्याग्निसम्बन्धः सकृद्दर्शनादेवावगम्यत इति सकृद्दर्शनगम्यैव व्याप्तिः। उपाधिशङ्कानिरासार्थमेव भूयोदर्शनमपेक्ष्यते; किन्तु वस्तुतो निरुपाधिकत्वविशिष्टस्यैव सम्बन्धस्यानुमानाङ्गत्वरूपा व्याप्तिः, न तु धूमाग्निसम्बन्धमात्ररूपा। निरुपाधिकत्वावधारणं भूयो दर्शनसाध्यमेवेत्युभयमीमांसक-सम्मतं मतम्। अतो भूयो दर्शनगम्यैव निरुपाधिकसम्बन्धरूपा व्याप्तिः। भूयोदर्शनेन सह सहकारिरूपेणानुगुणस्तर्कोऽप्यपेक्षितो भवति। साध्यवैपरीत्यमग्न्यभावादिकमारोप्य तेन लिङ्गभूतेन धूमाभावाद्यनिष्टप्रसक्तिस्तर्केण क्रियते। तर्कोऽयं व्याप्तिग्रहणवेलायां व्यभिचारशङ्कां निरस्य व्याप्तिं संशोध्यानुमानस्यानुग्राहको भवति। यथा—यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति। अध्ययनविधिर्यदि स्वर्गफलकः स्यात्तर्हि दृष्टार्थफलकत्वे सति अदृष्टफलकल्पनस्यान्याय्यत्वात् तर्कानुग्रहेणार्थज्ञानफलबोधको भवति। एवमेव 'अक्ताः शर्करा उपदधाति' इत्यत्र यदि घृतेन शर्कराणामञ्जनं न स्यात्, तर्हि 'तेजो वै घृतम्' इति वाक्यशेषो विरुध्येत इति तर्काद् घृताञ्जनं साध्यते। यथा चोक्तं मानमेयोदये—

एवं सर्वत्र तर्कौघैरर्थाभासनिरासतः।
वाक्यार्थस्थापनी सर्वा मीमांसा तर्करूपिणी।।
तस्मात् सर्वप्रमाणानां तर्कोऽनुग्राहकः स्थितः।
साध्ये विपर्ययाशङ्काविच्छेदस्तदनुग्रहः।।

अतस्तर्कसाहाय्येन भूयोदर्शनेनैव निरुपाधिकसम्बन्धावधारणाद् व्याप्तिः सिध्यति।

अग्निविशेषस्यानुमेयत्वे व्याप्तिरसिद्धा, अग्निसामान्यस्यैव धूमसामान्येन व्याप्तेः। अग्निसामान्यस्यानुमेयत्वे तु तस्य पूर्वमेव निश्चितत्वात् सिद्धसाधनदोष इति भाषमाणैश्चार्वाकैरनुमानभङ्ग एव आपाद्यते—

अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः।
विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम्।।

चार्वाकमतं परिहरन्तो मीमांसकाः प्रस्तुवन्ति—विशेषद्वारेणैव सामान्ययो-र्व्याप्तिः सिध्यति। इदानीं पर्वतेऽग्निरस्तीति देशकालविशेषस्याप्यनुमेयत्वात् तस्य च पूर्वमप्राप्तत्वात् सिद्धसाधनदोषस्यावकाश एव नास्ति।

अनुमानं त्रिविधम्—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि च। व्याप्तिश्च द्वेधा—अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्च। साधनस्य सद्भावे साध्यस्यापि सद्भावोऽन्वयव्याप्तिः। साध्यस्याभावे साधनस्याप्यभावो व्यतिरेकव्याप्तिः। यत्रोभयविधा व्याप्तिरस्ति तदन्वयव्यतिरेक्यनुमानम्। यस्य केवलमन्वयव्याप्तिरेवास्ति तत्केवलान्वयि। यस्य तु केवलं व्यतिरेकव्याप्तिरेवास्ति तत्केवलव्यतिरेकि। एतत्तृतीयं भाट्टा न स्वीकुर्वन्ति तत्स्थाने ते पञ्चममर्थापत्तिरूपं प्रमाणमभ्युपगच्छन्ति। अत्र पक्षस्य दुष्टत्वात् केवलव्यतिरेक्यनुमानं न स्वीकार्यम्। एषां विस्तृतं विवरणं तु न्यायमतानुसारेण बोद्धव्यम्।

प्रयोजनानुसारेणानुमानं द्विविधम्—स्वार्थानुमानम्, परार्थानुमानञ्च। यत्र स्वयमेव धूमादिकं दृष्ट्वा व्याप्त्यादिकं निरूप्यानुमीयते, तत्र स्वार्थानुमानम्। यत्र च स एवार्थः परवाक्येन बोध्यते, तत्र परार्थानुमानम्। परार्थानुमानवाक्यं नैयायिकमते पञ्चावयवम्—

| | | |
|---|---|---|
| प्रतिज्ञा (परं बोधयितुं पक्षवचनम्) | — | पर्वतो वह्निमान्। |
| हेतुः (साधनत्वावेदकं लिङ्गवचनम्) | — | धूमवत्त्वात्। |
| उदाहरणम् (व्याप्तिप्रदर्शनपुरस्सरं दृष्टान्तविधानम्) | — | यो यो धूमवान् स स वह्निमान् यथा महानसम्। |
| उपनयः (सिद्धव्याप्तिकस्य पक्षे उपनयनम्) | — | तथा चायम्। |
| निगमनम् (सहेतुकं पक्षस्य पुनर्वचनम्) | — | तस्मात् पर्वतो वह्निमान्। |

प्रतिज्ञया निगमनस्य हेतुना च उपनयस्य गतार्थत्वाद् मीमांसकाः परार्थानुमानवाक्यं त्र्यवयवं मन्यन्ते, न तु पञ्चावयवम्। प्रतिज्ञा-हेतूदाहरणानि उत वा उदाहरणोपनय-निगमनानि। बौद्धास्तूदाहरणमुपनयश्चेति द्वावेवावयवौ मन्यन्ते। उदाहरणम्—यो धूमवान् स वह्निमान् यथा महानसः। उपनयः—धूमवांश्चायम्।

'तस्माद् वह्निमान्' इति निगमनं त्वर्थात् सिध्यति। मीमांसका अत्र साध्यांशे अध्याहारदोषप्रसङ्गाद् एतत् सौगतमतं न स्वीकुर्वन्ति।

सामान्यविशेषभेदेनाप्यनुमानं द्विविधम्—विशेषतो दृष्टसम्बन्धः, सामान्यतो दृष्टसम्बन्धश्च। आद्ये द्वयोर्विशेषयोर्वस्तुनोः सम्बन्धो गृहीतो भवति। यथा—पर्वतो वह्निमान् धूमवत्त्वात्। अत्र वह्निधूमयोः सम्बन्धः। सामान्यतो दृष्टेऽनुमाने सामान्यज्ञानमहिम्ना सम्बन्धं स्थापयित्वा लिङ्गिनोऽनुमानं क्रियते। यथा—आत्मनः सद्भाव इच्छादिगुणवत्त्वाद् अनुमीयते। गतिमन्तं देवदत्तं देशान्तरे दृष्ट्वा सामान्यं ज्ञानं गृहीत्वा सूर्यस्य गतिविषयेऽप्यनुमानं क्रियते।

असिद्ध-विरुद्ध-अनैकान्तिक-प्रकरणसम-कालात्ययापदिष्टभेदेन नैयायिकाः पञ्चविधान् हेत्वाभासान् मन्यन्ते। मानमेयोदयकारमतेन तु एषु त्रयः (असिद्ध-अनैकान्तिक-कालात्ययापदिष्टाः) चतुर्थोऽसाधारण इति च चत्वारो हेत्वाभासाः। अप्रयोजक इति अनध्यवसित इति वाऽपरं हेत्वाभासं मत्वा षोढा हेत्वाभासा इति केचन भासर्वज्ञादयः। अयमुक्तेषु हेत्वाभासेष्वन्तर्भावयितुं शक्यते। एतत् सर्वं सविस्तरं शास्त्रदीपिकायां पार्थसारथिमिश्रेण विशदं विवेचितम्—प्रथमाध्यायस्य प्रथमपादे पञ्चमेऽधिकरणे। विस्तरभियाऽत्र मया पृथक् पृथग् विवेचनं न प्रस्तूयते।

**शाब्दम्**

यद्यपि नैयायिकैरनुमानप्रमाणानन्तरमुपमानं वर्णितम्, तथाप्यन्य-प्रमाणापेक्षया शाब्दस्य मीमांसानये विशेषगौरवात् शाब्दं प्रमाणं पूर्वं प्रतिपाद्यते। ज्ञातैः पदैः पदार्थस्मरणे कृते यद् असन्निकृष्टं वाक्यार्थज्ञानं तदेव शाब्दमुच्यते। पदबोधिताः पदार्था लक्षणया वाक्यार्थं बोधयन्ति। पदैः पदार्थबोधनं शब्दशक्तिजन्यत्वाद् अभिधानमेवेति पार्थसारथिमिश्राः। शब्दोऽपि संस्कारोद्बोधनद्वारेणैव पदार्थं बोधयतीति स्मरणमेव पदार्थज्ञानमिति चिदानन्दप्रभृतयः। पदानां पदार्थबोधेनोपक्षीणत्वाद् व्यवधानाच्च पदार्था एव स्वसंसर्गरूपं वाक्यार्थं बोधयन्तीति नैयायिकानां मतम्। भाट्टानां मते तु पदार्था लक्षणयैव वाक्यार्थं बोधयन्ति, वाच्यार्थानुपपत्त्या हि लक्षणा भवति। अतः पदैरवगताः पदार्थाः परस्परमन्वयं प्राप्य वाक्यार्थं बोधयन्ति। एतदेव भाट्टानामभिहितान्वयसिद्धान्तस्य स्वरूपम्। अभिहितान्वयवादे पूर्वं पदेभ्यः केवलमनन्विताः पदार्था उपस्थिता भवन्ति, ततस्तेषामाकाङ्क्षा-योग्यता-सन्निधिबलात् पदार्थानां परस्परमन्वयो भवति। ततश्च वाक्यार्थबोधो जायते। अस्मिन् विषये प्रभाकरमते अन्विताभिधानवादसिद्धान्तः प्रतिपादितोऽस्ति। तदनुसारेण पूर्वतोऽन्वितपदानामभिधया बोधनं भवति। अत्रास्मिन् मते तात्पर्याख्यशक्तेरपेक्षा न भवति। मतेऽस्मिन् अन्वितैः पदैरभिधानं भवति।

वाक्यार्थबोधे त्रीणि सहकारिकारणानि भवन्ति—आकाङ्क्षा, योग्यता, सन्निधिश्च। गौः, अश्वः, पुरुषो हस्तीत्यत्र पदानां परस्परमाकाङ्क्षाविरहा-दन्वयादर्शनाद् वाक्यार्थबोधो न भवति। 'अग्निना सिञ्चति' इत्यत्र अग्नौ सेचनयोग्यताभावाद् अन्वयाभावः, अतो वाक्यार्थबोधाभावः। भिन्नकालोच्चारितयोः 'गाम् आनय' इति पदयोः सन्निहितत्वाभावाद् अन्वयाभावः। प्रभाकरस्तु बुद्धिसन्निधिमात्रमेव सन्निधिं मन्यते, न तूच्चारणसन्निधिम्।

शाब्दं प्रमाणं द्विविधम्—पौरुषेयम्, अपौरुषेयञ्च। तत्र आप्तवचः पौरुषेयम्, वेदवचः अपौरुषेयम्। प्रभाकरमतानुसारेण वैदिकं वच एव शाब्दं

प्रमाणम्। पुरुषवचनानि तु वक्तुरभिप्रायानुमापकानि न स्वयमेव वाक्यार्थबोधकानि बहुविधशङ्काग्रस्तत्वात्। आप्तप्रणीतत्वमेवात्र हेतुः। आप्तत्वे च भ्रान्त्याद्यभावोऽभिमतः। कस्मिंश्चित् पुरुषे भ्रान्तिर्नास्तीति कदापि न निरूपयितुं शक्यते।

अपौरुषेये वेदे तु पुरुषस्पर्शसङ्गतः।
कलङ्को न विशङ्क्येत तत्कुतो व्यभिचारिता।।

पदार्थबोधिका शक्तिर्वृत्तिपदेन व्यपदिश्यते। वृत्तिश्च त्रिविधा—अभिधा, लक्षणा, गौणी च। मीमांसकनये या गौणी वृत्तिः, सैव आलङ्कारिकाणां मते व्यञ्जनावृत्तिः। तात्पर्याशक्तेरपि तत्रैवान्तर्भावः।

मुख्यतया वाक्यं वैदिकं भवेल्लौकिकं वा द्विविधं भवति—सिद्धार्थबोधकं वाक्यम्, विधायकवाक्यं च। सिद्धार्थबोधकवाक्यं यथा—'एष राजा पाञ्चालः'। विधायकवाक्यं यथा—'स्वर्गकामो यजेत'। विधायकवाक्यं किमपि कर्तुं प्रेरयति विधानं वा करोति। विधायकवाक्यं द्विविधं भवति—औपदेशिकम्, आतिदेशिकञ्च[1]। उपदेशवाक्यं यथा—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'। इष्टीनां प्रकृतिर्दर्शपूर्णमासः। 'समिधो यजति' इत्यादीनि प्रयाजादीनि कथं सम्पाद्येरन् इति जिज्ञासायामतिदेशवाक्यं प्रवर्तते—प्रकृतिवद्विकृतिः कर्तव्या इति। वैदिकवाक्येष्वपि विधिवाक्यानामेव प्रामाण्यम्। अन्येषां तु मन्त्र-नामधेय-निषेध-अर्थवादवाक्यानां विधिवाक्यैः सहान्वयेन एकवाक्यतयैव प्रामाण्यम्। तथा हि जैमिनिसूत्रम्—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'। शाब्दमेव प्रमाणं धर्मे निमित्तं नान्यदिति मीमांसासिद्धान्तः।

**उपमानम्**

उपमानं तावच्चतुर्थं प्रमाणम्। सादृश्यजन्यं ज्ञानमुपमानम्। अत्रेन्द्रियार्थसन्निकर्षो न भवति। गोविषयकज्ञानवान् पुरुषो यदा वनं गत्वा गवयं पश्यति, तदा गां स्मृत्वा तद्गतं गोसादृश्यमनुभवति। अनेन सादृश्येन 'अयं गवयः' इति तस्य ज्ञानं भवति। एतज्ज्ञानमेव उपमितिः, तत्करणमुपमानम्।

प्रत्यक्षज्ञानाद् भिन्नमिदमुपमानज्ञानम्। गोविषयकप्रत्यक्षज्ञानवान् पुरुषो यदाऽरण्यं गच्छति, तत्र तत्सदृशं गवयं पश्यति च। तदा सादृश्यात् तस्य गोः स्मृतिर्भवति, ज्ञानं च भवति यद् गौः गवयसदृशो भवतीति।

न्यायमतेन तु कस्माच्चिदाप्तपुरुषात् कश्चित् शृणोति—'गवयो गोसदृशो भवति' इदं वाक्यं श्रुत्वा सोऽरण्यं गच्छति, तत्र गोसदृशं पशुमेकं पश्यति। तदा आप्तपुरुषवाक्यात् 'अयमेव गवयः' इति ज्ञानं भवति। एतदेव अनुमानज्ञानम्।

१. अतिदेशो नामान्यत्र श्रुतानामङ्गानामन्यत्र प्रापकं शास्त्रम्।

तत्रोपमानप्रमाणे मीमांसकानां रुचिर्नावलोक्यते, तत्र अन्यप्रमाणानामपि सद्भावात् (विद्यमानत्वात्)।

भाट्टमतेनाविद्यमानस्य गोः स्मरणम्, प्रभाकरमतेऽविद्यमानस्य गोः गवयेन सह सादृश्यज्ञानमुपमानम्। नैयायिकास्तु उपमानमन्यादृशं मन्वाना गोगतसादृश्यज्ञानमनुमानीकुर्वन्ति। मीमांसकानां कृते कर्मकाण्डेऽतिदेशसिद्धेर्दृष्ट्या उपमानस्याधिकं महत्त्वं वर्तते। यथा श्लोकवार्तिके—

'भिन्नानुमानाद् उपमेयतोक्ता सौर्यादिवाक्यैरसहापि दृष्टा।

सादृश्यतोऽग्न्यादियुतं कथं नु प्रत्याययेदित्युपयुज्यते नः।।

अवगतसाङ्गदर्शपूर्णमासादिरूपप्रकृतिपदार्थस्य विकृतिदर्शनेन तत्सदृशस्य प्रकृतियागस्य स्मरणम्—सौर्ययागसदृश एकदेवरूपत्वौषधद्रव्यकत्वादिना आग्नेय इति।

### अर्थापत्तिः

मीमांसानये पञ्चमं प्रमाणमर्थापत्तिः। प्रमाणषट्केन प्रमितस्यार्थान्तरकल्पनं विनाऽनुपपत्तिं दृष्ट्वा तदुपपत्तये याऽर्थान्तरकल्पना सा अर्थापत्तिः। प्रमाणद्वयविरोधोऽनुपपत्तिः। तत्र (१) प्रत्यक्षप्रमितान्यथानुपपत्त्या अर्थकल्पना, यथा—प्रत्यक्षतोऽवगताद् दाहाद् वह्नेर्दाहशक्तिकल्पना। (२) अनुमानपूर्विकाऽर्थापत्तिर्यथा—देशान्तरप्राप्तिलिङ्गकेन अनुमानेन आदित्ये गतिमनुमाय तदन्यथाऽनुपपत्त्या आदित्ये गमनशक्तिकल्पना। (३) शब्दपूर्विका प्रमाणग्राहिणी अर्थापत्तिर्यथा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुतेन वाक्येन दिवाऽभुञ्जाने देवदत्ते पीनत्वरूपप्रमितार्थस्यान्यथानुपपत्तिमालोच्य तदुपपत्तये 'रात्रिभोजनवान् देवदत्तः' इति रात्रिभोजनरूपार्थप्रतिपादकवाक्यान्तरकल्पना। (४) उपमानपूर्विकाऽर्थापत्तिर्यथा—गवयदर्शनाद् एतत्सदृशो गौरिति यद् गवि गवयसादृश्यमुपमितं तदन्यथानुपपत्त्या तादृशसादृश्यविशिष्टे गवि तादृशप्रमाविषयत्वशक्तिरस्तीति कल्पना। (५) अर्थापत्तिपूर्विकाऽर्थापत्तिर्यथा—अर्थबोधान्यथानुपपत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना। (६) अभावपूर्विकाऽर्थापत्तिर्यथा—जीवति देवदत्ते तस्य गृहेऽभावदर्शनेन बहिर्भावस्य या कल्पना सा अभावपूर्विकाऽर्थापत्तिः।

अस्या अर्थापत्तेरनुमान एवान्तर्भावमिच्छन्ति नैयायिकाः। यथोक्तं न्यायमञ्जर्याम्—'अभावपूर्विकाऽर्थापत्तिरनुमानमेव'। अनुपपन्नं तेषां मतम्। अर्थापत्तावनुपपद्यमानस्य गम्यत्वम्, उपपादकस्य गमकत्वम्, अनुमितौ तूपपादकस्यैव गम्यत्वम्, अनुपपन्नस्य गमकत्वमिति तयोरत्यन्तभेदाद् नार्थापत्तिरनुमानेऽन्तर्भाव्या।

अर्थापत्तिर्द्विविधा—दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्च। शब्दकल्पनरूपा श्रुतार्थापत्तिः। यथा 'द्वारं द्वारम्' इति वाक्येऽन्वयसिद्ध्यर्थं शब्दगम्येन आवरणाद्यर्थान्तरेण भवितव्यम्। तस्य श्रुतशब्दानुपलम्भेन बाधे आवरणाद्यर्थः कल्प्यते। वेदे यथा—'विश्वजिता यजेत' इत्यादौ 'स्वर्गकामः' इति श्रुतैकदेशवाक्यत्वेन कल्प्यते। प्रभाकरमते श्रुतार्थापत्तिर्नास्ति।

## अनुपलब्धिः (अभावः)

प्रवृत्तियोग्यानां पञ्चानामपि प्रत्यक्षादीनां प्रमाणानां यत्राप्रवृत्तिः, सा योग्याऽनुपलब्धिर्नामाभावरूपं षष्ठं प्रमाणं घटाद्यभावविषयकम्। यथोक्तं कुमारिलभट्टपादैर्वार्तिके—

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राऽभावप्रमाणता।।

सोऽभावो नेन्द्रियग्राह्यो नाप्यनुमेयः, लिङ्गलिङ्गिनोर्ग्रहाभावात्, नाप्युपमानादेः प्रवृत्तिः, सादृश्यज्ञानादेरभावात्। अतः प्रमाणान्तरभूतयाऽनुपलब्ध्या प्रत्येतव्योऽभावः सिद्धः, सिद्धञ्च अभावस्य षष्ठप्रमाणत्वम्, अभावविषयकत्वं च। प्राभाकरास्त्वभावपदार्थमस्वीकुर्वन्तस्तद्ग्राहकत्वेन षष्ठं प्रमाणमभावमनुपलब्धिं वा नाङ्गीकुर्वन्ति। भाट्टमते तद् अभावपदार्थस्य सत्त्वात् तस्य प्रत्यक्षादिप्रमाणैर्ग्रहीतुमशक्यत्वाच्च परिशेषाद् अनुपलब्धिप्रमाणस्य स्वीकर्तव्यत्वेन नोपेक्षणीयम्।

पौराणिकाभिमतस्य सम्भवाख्यस्य प्रमाणस्यानुमानेऽन्तर्भावाद् ऐतिह्यस्य च आगमे शाब्दे वाऽन्तर्भावान्न पृथक् प्रमाणकोटौ परिगणनावकाशः। अतस्तयोश्चर्चाऽत्रानावश्यकी।

## प्रमाणानां स्वतस्त्वं परतस्त्वं वा (प्रामाण्यवादः)

उपर्युक्तप्रमाणषट्कैरुत्पन्नस्य ज्ञानस्य प्रामाण्याप्रामाण्यविषये भारतीयदर्शनेषु महान् मतभेदोऽवलोक्यते। प्रथमं तावदिदं विचारणीयं यत् प्रामाण्येऽप्रामाण्ये वा किं नाम स्वतस्त्वं किं नाम परतस्त्वं च। 'ज्ञानग्राहकातिरिक्तानपेक्षत्वं स्वतस्त्वम्'। अर्थाद् ज्ञानग्राहकसामग्रीव्यतिरिक्ता सामग्री प्रामाण्यग्रहाय नापेक्ष्यते चेत्, तर्हि प्रामाण्यस्य स्वतस्त्वम्। यत्र ज्ञानस्य तद्गतप्रामाण्यस्य च ग्रहणमेकयैव सामग्र्या भवति तत्प्रमाणं स्वतः। एतद्विपरीतं 'ज्ञानग्राहकातिरिक्तापेक्षत्वं परतस्त्वम्', अर्थाद् ज्ञानग्राहकसामग्री भिन्ना तत्प्रामाण्यग्राहकसामग्री ततो भिन्ना चेत्, तर्हि परतः प्रामाण्यम्।

मीमांसकमते ज्ञानस्य तत्प्रामाण्यस्य चोभयोर्ग्राहकसामग्री एकैव 'ज्ञातताऽन्यथानुपपत्तिप्रसूता अर्थापत्तिः' अस्ति। न्यायमते ज्ञानग्राहकसामग्री 'अनुव्यवसायः' प्रामाण्यग्राहकसामग्री च तद्भिन्नं 'प्रवृत्तिसाफल्यमूलकमनुमानम्' अस्ति।

अत्र विशेषरूपेणेदमवधेयं यद् मीमांसका वेदं नित्यम्, अपौरुषेयं स्वतः-प्रमाणं च मन्यन्ते। तेषां मतेन एकमात्रं प्रमाणं वेद एवास्ति। एष एव शाब्दं प्रमाणम् आगमप्रमाणं वा उच्यते। प्रत्यक्षादिप्रमाणानां चर्चा तु प्रसङ्गतः कृताऽस्ति। तानि मीमांसाया मुख्यप्रतिपाद्यानि न सन्ति। अतो मीमांसकानां स्वतःप्रामाण्यवादित्वं स्वाभाविकम्। अन्यथा वेदानां तदभिमतं स्वरूपं नङ्क्ष्यति। अत एव प्रत्यक्षादिप्रमाणानामपि प्रामाण्यसम्बन्धेऽपि वेदप्रामाण्यमाधारीकृत्य स्वतः-प्रामाण्यमेव स्वीक्रियते। चक्षुरिन्द्रियसंयोगाद् दूरत एव जलं दृष्ट्वा 'तत्र जलमस्ति' इति ज्ञानं यथार्थं मत्वा लोको जलार्थं तत्र गच्छति। अत्र सन्देहस्य अयाथार्थ्य-सम्भावनाया वा अवसर एव नास्ति। ज्ञानं तु यथार्थमेव भवति। तत्सत्यतायां सन्देहोऽयुक्तः। प्रभाकरेण तु स्पष्टमेवोक्तम्—'ज्ञानं' 'मिथ्या' चेति मिथो विरुद्धं वचनम्। यदि ज्ञानं तर्हि यथार्थमेव। तन्मिथ्या भवितुं न शक्नोति। कुमारिलभट्ट-स्याप्येतदभिमतम्। एवं मीमांसकानां सर्वेषु प्रमाणेषु स्वतःप्रामाण्यं सुस्थम्।

एतद्विपरीतं नैयायिका वदन्ति यद् यदा चक्षुरिन्द्रियसंयोगेन जलस्य ज्ञानं भवति, तदा जनो जलमाहर्तुं प्रवर्तते, तदा मनसि सन्देहो जायते 'जलं लभ्येत न वा लभ्येत', अर्थाद् जलविषयकं ज्ञानं सन्देहयुक्तमस्ति। ततस्तत्र गत्वा जले लब्धे सति निश्चिनोति—'जलमस्ति' इति मम ज्ञानं यथार्थमस्ति। चक्षुरिन्द्रियेण सह घटसन्निकर्षेण 'अयं घटः' इति ज्ञानं भवति। यन्नैयायिकैः 'व्यवसायः' इति कथ्यते। ज्ञानस्य व्यवसायस्य वा याथार्थ्यनिश्चयः पश्चात् 'घटज्ञानवानहम्' इति ज्ञानेन भवति, यत्तैरनुव्यवसाय इत्युच्यते। अतोऽनया प्रक्रियया नैयायिकाः प्रामाण्यस्य परतस्त्वमभ्युपगच्छन्ति।

अत्र मुख्यरूपेण मतद्वयं विद्यते—मीमांसकानां नैयायिकानाञ्च। मीमांसकेष्वपि मतत्रैविध्यं वर्तते—(१) प्रभाकरमतम्, (२) भाट्टमतम्, (३) मुरारिमिश्रमतञ्च।

१. प्रभाकरमतेन ज्ञानं स्वतःप्रमाणं स्वप्रकाशं चास्ति। प्रमाणस्य प्रामाण्यं स्वतः सिद्धमस्ति। ज्ञानत्वेनैव तस्य याथार्थ्यम्। अतो ज्ञानस्य प्रामाण्याय अन्यापेक्षा नास्ति, अतः प्राभाकराः स्वभावतः स्वतःप्रामाण्यवादिनः।

२. भाट्टमते येन ज्ञानमुत्पद्यते तेनैव तस्य प्रामाण्यमपि सिध्यति। चक्षुःघटसन्निकर्षाद् 'अयं घटः' इति ज्ञानं जायते। तेषां मते ज्ञानं स्वप्रकाशं

नास्ति। अतस्तस्य ज्ञानस्य भानं साक्षान्न भवति। तत्तु अतीन्द्रियमस्ति। अतो घटज्ञानानन्तरं 'मया ज्ञातोऽयं घट:' इति भानं भवति। ज्ञाते घटे ज्ञाततानामको धर्म उत्पद्यते। अस्या ज्ञातताया: प्रत्यक्षं ज्ञानं भवति। अयं धर्मो घटे ज्ञात एव सम्भव:। अतो ज्ञातताऽन्यथाऽनुपपत्तिप्रसूतया अर्थापत्त्या भाट्टा ज्ञानस्यास्तित्वं स्वीकुर्वते। अनया ज्ञाततयैव ते ज्ञानस्य प्रामाण्यं स्थापयन्ति। एतदेव तेषां स्वत:प्रामाण्यस्य स्वरूपम्।

३. मुरारेस्तृतीय: पन्थास्तावत्। मुरारिमतानुसारेणेन्द्रियार्थसंयोगाद् ज्ञाने जाते 'अयं घट:' इति भानं भवति। अस्य ज्ञानस्य सत्यतानिश्चयार्थं 'घटज्ञानवानहम्' इत्यनुव्यवसायो भवति। अनेन अनुव्यवसायेनैव 'अयं घट:' इति ज्ञानस्य तस्य प्रामाण्यस्य चोभयोर्निश्चयो भवति।

प्रभाकरमते स्वप्रकाशादिना, भाट्टमते ज्ञाततालिङ्गकानुमित्यादिना मुरारिमते अनुव्यवसायादिना च यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वस्य सर्वसाधारणत्वात् स्वत:-प्रामाण्यसिद्धि:। मुरारिमिश्रमते नैयायिकमते चानुव्यवसायगतं साम्यं वर्तते; किन्तु तयोरयं भेदोऽस्ति यन्नैयायिकमते ज्ञानं प्रथमं सन्दिग्धं भवति, मिश्रमते न तथा। यतो हि मिश्रमते प्रामाण्यसामग्री सैवास्ति या ज्ञानसामग्री। 'मनसैव ज्ञानस्वरूपवत् तत्प्रामाण्यग्रह:' इति कुसुमाञ्जलिप्रकाशे वर्द्धमान:। यद्यपि भाट्टमते ज्ञाततया प्रामाण्ये मिश्रमते अनुव्यवसायेन प्रामाण्ये सिद्धे वस्तुत: प्रभाकर एव यथार्थरूपेण स्वत:प्रामाण्यवादी। तथापि त्रयोऽपि न्यायमतापेक्षया स्वत:प्रामाण्यवादिन एव।

कुमारिलभट्टस्तु प्रामाण्यं स्वत:, अप्रामाण्यं च परतो मन्यते। यथोक्तं श्लोकवार्तिके—

स्वत: सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।
न हि स्वतोऽसती शक्ति: कर्तुमन्येन शक्यते।।

प्रामाण्याप्रामाण्यविषये भारतीयदर्शने षट् पक्षा: सन्ति—

| | | | | | |
|---|---|---|---|---|---|
| (१) न्यायमते | — | प्रामाण्यम् | अप्रामाण्यञ्च | उभयं | परत:। |
| (२) सांख्यमते | — | ,, | ,, | ,, | स्वत:। |
| (३) मीमांसकमते | — | ,, | स्वत: | ,, | परत:। |
| (४) बौद्धानां केषाञ्चिन्मते | — | ,, | परत: | ,, | स्वत:। |
| (५) शान्तरक्षितमते | — | अभ्यासदशापन्ने | ज्ञाने | उभयं | स्वत:। |
| | | अनभ्यासदशापन्ने | ,, | ,, | परत:। |
| (६) जैनमते | — | उत्पत्तौ उभयं परत:, ज्ञप्तौ उभयं स्वत:। | | | |

इति सङ्क्षेपतो विनिवेद्य विरम्यते।



# जैनदर्शनपर्यालोचनम्

**डॉ. हरिप्रसाद-अधिकारी**

उपाचार्यः,

तुलनात्मकधर्मदर्शनविभागे

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी

***

जयति कामक्रोधरागद्वेषादिदोषानिति जिनः। जिनादागतो जिने भवो वा जैनः। जैनानां दर्शनं जैनदर्शनम्। जैनसम्प्रदायपरम्परायां चतुर्विंशतितीर्थङ्कराणां समुल्लेखः प्राप्यते। तीर्थं करोतीति व्युत्पत्त्या निष्पन्नोऽयं तीर्थङ्करशब्दस्तेषां पवित्रीकरणसामर्थ्यं द्योतयति। तेषां पदार्पणेनापवित्रमपि स्थानं तीर्थत्वं भजत इति जैनपथपथिका विश्वसन्ति। चतुर्विंशतितीर्थङ्करेष्वाद्य ऋषभदेवोऽन्तिमश्च गौतमबुद्धसमकालिको महावीरो वर्तते। जैनधर्माधारभूतानां चतुर्विंशतितीर्थङ्कराणां नामानीत्थं वर्तन्ते[१] —

| | |
|---|---|
| १. ऋषभदेवः | २. अजितनाथः |
| ३. सम्भवनाथः | ४. अभिनन्दनः |
| ५. सुमतिनाथः | ६. पद्मप्रभः |
| ७. सुपार्श्वनाथः | ८. चन्द्रप्रभः |
| ९. पुष्पदन्तः | १०. शीतलनाथः |
| ११. श्रेयांसनाथः | १२. वासुपूज्यः |
| १३. विमलनाथः | १४. अनन्तनाथः |
| १५. धर्मनाथः | १६. शान्तिनाथः |
| १७. कुंथुनाथः | १८. अदहनाथः |
| १९. मल्लिनाथः | २०. मुनिसुव्रतनाथः |
| २१. नमिनाथः | २२. नेमिनाथः |
| २३. पार्श्वनाथः | २४. महावीरः |

१. २००१ वर्षे वाराणसीतो मैत्रीभवनद्वारा प्रकाशितायाः समन्वयपत्रिकायाः पृ. १४ द्रष्टव्यम्।

जैनदर्शने सर्वेश्वरो न स्वीक्रियते। पूर्वोक्ताश्चतुर्विंशतितीर्थङ्करा एव जैनपथानुयायिनामुपास्या:। तीर्थङ्कराश्चैते भवबन्धनविरहितत्वाद् मुक्ता भवन्ति। सांसारिका: कामक्रोधलोभमोहादयो भावा नैतानाबध्नन्ति। एते न केवलं मुक्ता एवापि त्वनन्तज्ञानशक्त्यैश्वर्यसमन्विता अपि भवन्ति। जैनमान्यतानुसारं सर्वे बन्धनग्रस्ता जीवा: (मानवा:) तत्पथानुशरणेन मोक्षाधिकारिणो भवन्ति।

जैनधर्मस्य श्वेताम्बर-दिगम्बराख्यौ द्वौ प्रमुखौ सम्प्रदायौ स्त:। एतयो: सैद्धान्तिको भेद: स्वल्पतर एव, चरित्रभेदश्च बहुतरो विद्यते। दिगम्बरा आचारपालने कठोरा:, श्वेताम्बराश्चोदारा वर्तन्ते। दिगम्बरा निर्वस्त्रा:, श्वेताम्बराश्च श्वेतवस्त्रधारिणो भवन्ति। नियमोऽयं केवलं मुनीनां कृते वर्तते, न तु गृहस्थानाम्। दिगम्बरसम्प्रदायानुसारं मूलागमग्रन्था: सम्प्रति विलुप्तप्राया वर्तन्ते। केवलज्ञान-युतानां जनानां भोजनस्यावश्यकतापि न जायते। स्त्री मुक्तेरधिकारिणी न भवति। श्वेताम्बरास्तु नेत्थं स्वीकुर्वन्ति।

**प्रमाणविचार:**

प्रायश: सर्वाणि भारतीयदर्शनानि स्वस्वप्रमाणद्वारा तत्त्वं परिशीलयन्ति। नास्तिकाग्रगण्यश्चार्वाकोऽपि प्रत्यक्षप्रमाणमवलम्ब्य प्रवर्तते। चार्वाकादारभ्य पौराणिकपर्यन्तमाहत्याष्टौ प्रमाणानि भवन्ति। जैनास्तु प्रत्यक्षानुमानाप्तवचनरूपाणि त्रीण्येव प्रमाणानि स्वीकुर्वन्ति। जैनग्रन्थेषु प्रमाणानामुल्लेख: स्पष्टतया कृतो वर्तते। यथा हि—प्रत्यक्षानुमानशाब्दानि प्रमाणानि[१]। जैनदार्शनिकाश्चार्वाकमतखण्डनेऽपि दत्तावधाना दृश्यन्ते। तन्मते चार्वाकाणां प्रत्यक्षप्रमाणसिद्धिरपि अनुमान-प्रमाणद्वारेणैव जायते। परं चार्वाकास्त्वनुमानं भ्रमात्मकं भवतीति धिया तत्प्रामाण्यं न स्वीकुर्वन्ति, परं किं प्रत्यक्षं भ्रमात्मकं न जायते? एवमेव परलोकास्तित्वं खण्डयन्तश्चार्वाका: स्वयमेव प्रत्यक्षसीमातो बहिर्भूता भवन्ति। अत: प्रत्यक्षानुमान-शब्दप्रमाणानि वस्तुतत्त्वाधिगमायावश्यं स्वीकर्तव्यानि।

**ज्ञानविचार:**

परोक्षापरोक्षभेदेन ज्ञानस्य द्वैविध्यं स्वीकुर्वन्ति जैना:। अपरोक्षज्ञानमपि अवधि-मन:पर्याय-केवलभेदेन त्रिधा विभज्यते। मति-श्रुतभेदेन परोक्षज्ञानं द्विविधं

---

१. न्यायावतारविवृति:, (पृ.४-सतीशचन्द्रविद्याभूषणसम्पादिता), भारतीय दर्शन (चटर्जी और दत्त) ६१ पृ. उल्लिखितम्।

भवति। इदं हि परोक्षापरोक्षत्वं जैनेतरभारतीयदर्शनेभ्यो भिद्यते[१]। अत्र तावदेतेषां सङ्क्षिप्तं विवरणं प्रस्तूयते—

१. **मतिः** — विषयेन्द्रियमनोगतज्ञानावरणेषु विनष्टेषु यज्ज्ञानं स्फुरति सैव मतिः। घटादीनां प्रत्यक्षतः पूर्वं यन्मनसात्मकं ज्ञानं जायते सैव मतिरस्ति। सङ्क्षेपतो दृष्टिस्थैर्यमेव मतिज्ञानम्।

२. **श्रुतम्** — ज्ञानावरणे पूर्णतो विनष्टे सति मतिज्ञानजन्यं स्पष्टज्ञानमेव श्रुतमित्यभिधीयते।

३. **अवधिः** — यद्धि ज्ञानं सम्यग्दर्शनादिभ्यः समुत्पन्नमुपशमकारणं विषयव्यापकञ्च भवति, तदवधिज्ञानशब्देनाभिधीयते। ईदृशमेवेदं वस्त्विति निर्धारणमेवावधिज्ञानम्।

४. **मनःपर्यायः** — ज्ञानावरणभूतानीर्ष्याप्रभृतिदोषान् विजित्य साधको यदा परहृदयवार्ताबोधसमर्थो जायते, तदा तज्ज्ञानं मनःपर्यायसंज्ञां लभते।

५. **केवलम्** — सर्वावरणानां क्षये जाते केवलज्ञानमुत्पद्यते। इदं ज्ञानं जैनज्ञानेषु समुत्कृष्टं मोक्षसाधनभूतञ्च मन्यते। एतस्य प्राप्तय एव साधका अहर्निशं दत्तावधाना जायन्ते। अन्यज्ञानेभ्यः पृथक्त्वादस्य केवलसंज्ञा। एतदेव ज्ञानं जैनानां तत्त्वदर्शनमित्युच्यते। एतेषु पञ्चप्रकारकज्ञानेषु प्रत्यक्ष-परोक्षयो-र्भेदोऽपि स्वीक्रियते। यथोक्तम्—

विज्ञानं त्वपराभासि प्रमाणं बाधवर्जितम्।
प्रत्यक्षं च परोक्षं च द्विधा ज्ञेयं विनिश्चयात्[२]।।

**तत्त्वविचारः (अनैकान्तवादः)**

जैनदार्शनिकानां सापेक्षतावादसिद्धान्तोऽनैकान्तवादनाम्नापि ज्ञायते। एतेन वस्तुबाहुल्यं तद्धर्मबाहुल्यञ्च स्वीक्रियते। सर्वाणि वस्तूनि उत्पादव्ययध्रौव्यधर्मयुक्तानि भवन्ति। यथोक्तम्—

प्रतिक्षणोत्पादविनाशयोगिस्थिरैकमध्यक्षमपीक्षमाणः।
जिन त्वदाज्ञामवमन्यते यः स पातकी नाथ पिशाचकी वा[३]।।

---

१. न्यायावतारविवृतौ ३० पृष्ठे।

२. सर्वदर्शनसङ्ग्रहे आर्हतप्रकरणे, १५१ पृ.।

३. स्याद्वादमञ्जर्याः २१ तमं पद्यम्।

अपि च—

अनन्तधर्मात्मकमेव तत्त्वमतोऽन्यथा सत्त्वमसूपपादम्।
इति प्रमाणान्यपि ते कुवादिकुरङ्गसन्त्राससनसिंहनादाः[१]।।

एतस्मादिदं सुसिध्यति यद् जैनसिद्धान्तानुसारं प्रत्येकस्य वस्तुनोऽनेकधर्मा भवन्ति। एकेन धर्मेण वस्तुनः स्थितिर्ज्ञायतेऽपरेण चान्यवस्तुभ्यस्तत्पार्थक्यं स्वस्थितिबोधको धर्मो जैनैः स्वपर्यायनाम्नाऽभिसम्बोध्यते। परपार्थक्यबोधकधर्मश्च परपर्याय इति। यथैकस्मिन् मनुष्ये वर्ण-कुल-गोत्र-जाति-प्रभृतयः प्रथमस्थानीया धर्मा राजन्ते, तथैव तस्य मनुष्यस्य देशधर्मप्रभृतयोऽभावात्मकधर्मा अपि भवन्ति। स्वपर्यायधर्मापेक्षया परपर्यायधर्माणां संख्याधिक्यमस्ति। यथोक्तम्—

स्तोकाः स्वपर्यायाः परपर्यायास्तु व्यावृत्तिरूपा अनन्ता अनन्तेभ्यो धर्मेभ्यो व्यावृत्तित्वात्। यद्येवंरूपेण भावात्मकाभावात्मकधर्मयोर्विचारः क्रियेत तदा प्रत्येकं वस्त्वनन्तधर्मसंवलितं सेत्स्यति[२]।

**द्रव्यविचारः**

जैनदर्शनं वस्तुवादि-सापेक्षतावादि-बहुत्ववादि चास्तीति पूर्वमेवोट्टङ्कितम्। एतद्दृष्ट्या तत्त्वमनन्तधर्मात्मकं भवति। उत्पादव्ययध्रौव्यं सदिति सल्लक्षणं जैनानाम्। द्रव्ये गुणपर्यायौ धर्मौ भवतः। चेतनाचेतने द्वे स्वतन्त्रद्रव्ये भवतः। द्रव्याणामप्यास्तिकायनास्तिकायरूपेण भेदद्वयं भवति। विस्तारयुतत्वात् सत्तासम्पन्नत्वाच्चास्तिकाय इति संज्ञा। कालं विहाय सर्वे पदार्था अस्तिकायकोटौ परिगण्यन्ते[३]।

अस्तिकायद्रव्याणामपि जीवाजीवभेदेन द्वैविध्यं भवति। जीवात्मशब्दौ पर्यायवाचिनौ वर्तेते। पुनरपि मुक्त-बद्धरूपेण जीवस्यापि द्वैविध्यं स्वीक्रियते। बद्धजीवा अपि त्रसस्थावरभेदेन द्विविधा भवन्ति। गतिमन्तो जङ्गमा त्रसजीवा वोच्यन्ते, अगतिकाश्च स्थावराः कथ्यन्ते। अनया तालिकया द्रव्यप्रकाराः सम्यग् ज्ञातुं शक्यन्ते[४] —

---

१. स्याद्वादमञ्जर्या द्वाविंशतितमं पद्यम्।
२. भारतीय दर्शन, चटर्जी और दत्त, पृ. ६९।
३. तत्रैव, ६२ पृष्ठे।
४. भारतीय दर्शन (चटर्जी और दत्त), ७२ पृ. द्रष्टव्यम्।




जैनसिद्धान्तानुसारं त्रसजीवा गतिमन्तो भवन्ति, स्थावराश्चागतिमन्त:। स्थावराणां केवलं स्पर्शेन्द्रियबोधो जायते। त्रसजीवेषु मनुष्य: सर्वेभ्यो विकसित: पञ्चेन्द्रियसम्पन्नश्च वर्तते। अनस्तिकायविभागे धर्माधर्माकाशपुद्गला: समापतन्ति[१]।

**स्याद्वाद: (सप्तभङ्गीनय:)**

स्याद्वादसिद्धान्तोऽयं जैनदर्शनस्य प्रमुखतम: सिद्धान्तो वर्तते। अनेन ज्ञानसापेक्षता द्योत्यते। जैनेतरदर्शनसिद्धान्तदृष्ट्याऽवलोक्यते चेत्, जैनसिद्धान्ते सन्देहाभासो जायते; किन्तु जैनदर्शनदृष्ट्या स्याद्वादसिद्धान्ते लेशमात्रमपि सन्देहावकाशो न वर्तते। जैनदर्शने 'स्यात्'शब्दस्य प्रयोगो विशेषार्थे(विशिष्टार्थे) विहितोऽस्ति, येन ज्ञानस्यापेक्षता सूच्यते। अत: 'स्यात्'शब्दार्थ: 'सापेक्षतया' इति शब्देन परिभाषयितुमुचितं प्रतिभाति। समस्तमानवीयज्ञानानामांशिकत्वात् सापेक्ष्यत्वाच्चास्मत्प्रकथनानि परामर्शवाक्यानि चांशिकानि सापेक्षाणि च भवन्ति। एतद्द्योतनाय प्रत्येकस्मात् प्रकथनात् परामर्शाद् वा पूर्वं 'स्यात्'पदमवश्यं योजनीयमिति जैनाचार्याणां सुचिन्तितमतमस्ति। अस्यैव सापेक्ष्यसत्यस्य सूचनं करोति स्याच्छब्द:। स्यात्पदतात्पर्यं प्रकाशयता लिखितं सर्वदर्शनसङ्ग्रहकारेण माधवाचार्येणापि[२]—'स्याच्छब्द: खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतक:। यथोक्तम्—वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम्। स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपक:। यदि पुन: एकान्तद्योतकोऽयं स्याच्छब्द: स्यात्तदा स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात्। अनेकान्तद्योतकत्वे तु

१. भारतीय दर्शन (चटर्जी और दत्त), ७३तमे पृष्ठे।

२. सर्वदर्शनसङ्ग्रहे, आर्हतप्रकरणे १४९ पृष्ठे।

स्यादस्ति कथञ्चिदस्तीति स्यात्पदात्कथञ्चिदयमर्थो लभ्यत इति नानर्थक्यम्। तदाह—

स्याद्वादः सर्वथैकान्तत्यागात् किं वृत्तचिद्विधेः।
सप्तभङ्गिनयापेक्षो हेयादेयविशेषकृत्।।

अतः परं समासेन सप्तभङ्गीनयः प्रस्तूयते—

१. स्यादस्ति (सापेक्षतया वस्त्वस्ति)
२. स्यान्नास्ति (सापेक्षतया वस्तु नास्ति)
३. स्यादस्ति च नास्ति च (सापेक्षतया वस्तु नास्ति चास्ति च)
४. स्यादवक्तव्यम् (सापेक्षतया वस्त्ववक्तव्यमस्ति)
५. स्यादस्ति चावक्तव्यञ्च (सापेक्ष्यतया वस्त्वस्त्यवक्तव्यञ्चास्ति)
६. स्यान्नास्ति चावक्तव्यञ्च (सापेक्षतया वस्तु नास्त्यवक्तव्यञ्चास्ति)
७. स्यादस्ति च नास्ति चावक्तव्यञ्च (सापेक्षतया वस्त्वस्ति नास्त्यवक्तव्यञ्चास्ति।

अतः परं क्रमशः सप्तानामेतेषां समासेन विस्तारो विधीयते।

**१. स्यादस्ति**

सर्वेषामेतेषां सप्तपरामर्शानां जैनपरम्परायां 'नय' इत्यपरा संज्ञा वर्तते। जैनतार्किकाः प्रत्येकनयेन सह स्यादिति पदं योजयन्ति। स्यात्पदेनेदमेवाभिप्रेतं यत् कोऽपि नयः परामर्शो वैकान्तिकरूपेण निरपेक्षरूपेण वा सत्यसंवलितो न वर्ततेऽपि त्वापेक्षिको भवति। घटेऽस्ति वाचकनयप्रयोग इत्थं जायते—स्याद् घटोऽस्ति। अत्र स्यात्पदेन घटस्य स्थान-काल-वर्णादीनां सङ्केतो जायते। स्याद् घटो रक्तोऽस्ति। एतेनेदं बोध्यते यद् घटः सर्वकालस्य कृते रक्तो नास्ति, अपि तु कस्मिंश्चिद् विशेषसमये परिस्थितौ वा रक्तोऽस्ति। अत्रेदमपि बोध्यते यद् एतस्य रक्तवर्णो विशिष्टप्रकारकोऽस्ति। जैनदार्शनिकानां मान्यतानुसारमस्ति-बोधकपरामर्शानां सामान्यस्वरूपं 'स्यादस्ति' इत्येवमस्ति।

**२. स्यान्नास्ति**

घटसम्बन्धे नास्तिबोधकपरामर्शस्वरूपमित्थं भवेत्—स्याद् घटोऽस्मिन् प्रकोष्ठे नास्ति। एतस्य तात्पर्यमिदं नास्ति यत् प्रकोष्ठाभ्यन्तरे कोऽपि घटो नास्ति स्थातुं वा न शक्नोति। अत्र स्यात्पदेनेदमेव द्योत्यते यद् यस्य घटस्य परामर्शो जायते स घटोऽत्र नास्तीति। विशेषवर्णाकृतिविशिष्टो घटोऽस्मिन् समयेऽस्मिन्

प्रकोष्ठे नास्तीति भावः। यद्यत्र स्यात्पदप्रयोगो न क्रियेत चेत्, कस्यापि घटस्य बोधः सम्भवति। प्रकारान्तरेणापि ज्ञातुं शक्यते। तद्यथा—स्याद् घटः कृष्णो नास्ति, एतत्तात्पर्यं तु कश्चन विशेषघटो विशेषस्थाने काले च कृष्णो नास्ति। इत्थं नास्ति-बोधकपरामर्शेष्वपि स्यात्पदप्रयोगः परमावश्यको वर्तते। एतत्परामर्शस्य सामान्यं रूपं स्यान्नास्तीत्येवमस्ति।

### ३. स्यादस्ति च नास्ति च

घटः कदाचिद् रक्तवर्णो भवितुमर्हति, कदाचिच्चान्यवर्णः। एतद् व्यक्तीकरणाय मिश्रवाक्यस्य संयुक्तपरामर्शोऽपेक्ष्यते। घटो रक्तवर्णोऽस्ति, घटो रक्तवर्णो नास्ति। स्यादस्ति च नास्ति चानेन परामर्शेनास्तित्वमनास्तित्वञ्चोभयमपि सकृदेव सूच्यते। जैनतार्किकाणामयं तृतीयपरामर्शोऽस्ति। अनेन कस्यापि वस्तुनो नास्तित्वास्तित्वसम्बन्धे सकृदेव बोधो जायते। पदार्थानां विभिन्नदृष्ट्या विचारार्थमयं प्रकारभेद आवश्यक इति जैनदार्शनिका मन्वते।

### ४. स्यादवक्तव्यम्

यदा सम्यक्तया घटस्य पाको न जायते, तत्र किञ्चित् कृष्णांशस्तिष्ठति। यदा च घटस्य पूर्णपाको जायते, तदा तत्र रक्तवर्णः सम्यक् परिस्फुरति। अत्र यदि घटस्य सर्वावस्थासु सर्वसमयेषु च कः वर्ण इत्येवंविधं प्रश्नं कोऽपि कुर्यात्, तदेदमेवोत्तरं प्रदातुं शक्यते यद् अस्यामवस्थायां घटवर्णसम्बन्धे किमपि वक्तुं न शक्यते। अतो हेतोर्यस्मिन् परामर्शे परस्परविरोधिगुणानां युगपद् विचारः करणीयो भवेत्, तद्यथार्थरूपं स्यादवक्तव्यमिति युज्यते। अयञ्च जैनानां चतुर्थपरामर्शो विद्यते। दार्शनिकदृष्ट्या चतुर्थपरामर्शस्य स्वरूपमतीव महत्त्वपूर्णमस्ति। अस्य मूलरहस्यमिदमेवास्ति यद् विभिन्नानामवस्थानां दृष्टीनाञ्च दृष्ट्यैव कस्यापि वस्तुनो यत्किमपि वर्णनं सम्भवति। एवं न कृत्वा कोऽपि यदि युगपद् वस्तुवर्णने प्रवर्तेत तदा साफल्यं नाधिगच्छति। तत्रावश्यं वस्तुनोऽवक्तव्यता स्वीकर्तव्या भविष्यति। पुनश्चेदं तथ्यमप्यवगन्तव्यं यत् सर्वेषां प्रश्नानामस्तिनास्तिमूलकोत्तरदानमेव नास्ति पटुत्वं चातुर्यं वा दार्शनिकानाम्। दार्शनिकैरिदमप्यवगन्तव्यं यद् बहव एवंविधा प्रश्ना भवन्ति येषामुत्तरं न दातुं शक्यते। जैनदार्शनिकास्तर्कविरोधं दोषत्वेन स्वीकुर्वन्ति। तन्मत एकस्मिन् वस्तुनि सकृत् परस्परविरुद्धधर्माणां प्रयोगो न कर्तुं शक्यते।

सप्तभङ्गिनयेषु चत्वार एव भवन्ति मुख्यनयाः, अपरे त्रयो नयास्तु चतुर्णां नयानां मिश्रणेन समुत्पद्यन्ते। प्रथम-द्वितीय-तृतीयनयानन्तरं पृथक्-पृथक्

चतुर्थनययोगे कृते क्रमशः पञ्चम-षष्ठ-सप्तमनया जायन्ते। तेषामपि समासेनात्र प्रस्तुतिर्विधीयते—

**५. स्यादस्ति चावक्तव्यञ्च**

कयाचिद् विशेषदृष्ट्या घटो रक्तवर्णयुतोऽस्तीति वक्तुं शक्यते। परन्तु दृष्टेः स्पष्टनिर्देशनं विना तु घटवर्णवर्णनमसम्भवमेव सम्पद्यते। अतो व्यापकदृष्ट्या घटो रक्तोऽस्ति। एतेन सहैवात्रावक्तव्यमपि राजते। अयमेवास्ति पञ्चमो नयः।

**६. स्यान्नास्ति चावक्तव्यञ्च**

द्वितीयचतुर्थनययोः क्रमिकसंयोजनेन षष्ठो नयो जनिं लभते। कयाचिद् दृष्ट्या रक्तवर्णो नास्ति, अवक्तव्यञ्चास्ति।

**७. स्यादस्ति च नास्ति चावक्तव्यञ्च**

एवमेव तृतीयचतुर्थनययोः संयोजनेन सप्तमनयस्योत्पत्तिर्जायते। अत्रापि दृष्टिभेदेनास्तिनास्त्यवक्तव्यानां पृथक्-पृथक् सम्भावना जायते।

**स्याद्वादसमालोचना**

जैनेतरभारतीयदार्शनिकाः 'स्यात्'पदस्य 'सम्भवतः' इत्यर्थं स्वीकृत्य संशयवादी अयमित्याक्षेपपुरःसरं जैनानां कट्वालोचनां विदधति। बौद्धै-र्वेदान्तिभिश्चायं वादो बहुधा खण्डितः। तन्मते सत्त्वासत्त्वप्रभृतीनां विरोधिधर्माणामेकत्र स्थितिर्न सम्भवति। प्रकाशान्धकारौ कथमेकस्मिन् स्थाने स्थातुं शक्नुतः। अतः स्याद्वादोऽयं विरुद्धवाक्यानां समूह एवास्ति।

अत्र तावज्जैनदर्शनपक्षतो विचार्यते चेत् समालोचनेयं न सत्यसंवलिता वर्तते। यतो हि स्याद्वादसिद्धान्तोऽयं संशयवादो न, अपि तु सापेक्ष्यवादोऽस्ति। जैनदार्शनिकैरेतत् कदापि नोक्तं यद् वस्तुषु परस्परविरुद्धधर्मा एकयैव दृष्ट्या एकस्मिन्नेवार्थे भवन्तीति। इदं सत्यमस्ति यद् वस्तु अनन्तधर्मात्मकं भवति, तत्र परस्परविरुद्धधर्मा अपि राजन्ते। यतो हि वस्तूनामयं स्वाभावोऽस्ति। अस्मज्ज्ञान-स्यांशिकत्वात् सापेक्षत्वाच्च दृष्टिविशेषेणैव वस्तुधर्मा ज्ञायन्ते। न्यायवाक्येषु तेषामेवाभिव्यक्तिः क्रियते। यथा हि—द्रव्यदृष्ट्या वस्तुषु एकता नित्यता पर्यायदृष्ट्या चानेकतानित्यतादीनां सापेक्षतया विधानं क्रियते स्याद्वादसिद्धान्तेन। स्वद्रव्य-रूपदेशकालदृष्ट्या वस्तुनः सत्तायास्तथा च परद्रव्यरूपदेशकालदृष्ट्या वस्तुनोऽ-सत्तायाः सापेक्षतया विधानं क्रियते। अतः स्याद्वादे विरोधकल्पनं नोचितम्[1]।

१. स्वरूपद्रव्यक्षेत्रकालभावैः सत्त्वम्, पररूपद्रव्यक्षेत्रकालभावैःतदसत्त्वम्, तदा क्व विरोधावकाशः? भारतीय दर्शन (आलोचन एवं अनुशीलन), ३५ पृ., सी. डी. शर्मणाप्युद्धृतम्।

**बन्ध-मोक्षौ**

कर्म भौतिकं पौद्‌गलिकञ्चास्ति। कर्मपुद्‌गलैर्जीवग्रहणं बन्धः, कर्मपुद्‌गलेभ्यो जीवानां सर्वथा निवृत्तिश्च मोक्षो वर्तते। जैनदर्शने कर्मणां मुख्या अष्टौ प्रकाराः वर्णिताः। ते च ज्ञानावरणीय-दर्शनावरणीय-मोहनीय-वेदनीय-आयुष्य-नाम-गोत्र-अन्तरायनाम्ना प्रसिद्धाः सन्ति। एतानि भोग्यजगता भोगायतनशरीरेण च जीवसम्बन्धकारकाणि भवन्ति। जीवः स्वभावत एव मुक्तो भवति; किन्त्वनाद्यविद्यावासनाकारणाद् बन्धने पतति। बन्धनान्यपि पञ्चप्रकारकाणि भवन्ति। तानि च मिथ्यात्व-अविरति-प्रमाद-कषाय-योगाख्यानि सन्ति। कषायाणां कारणादेव जीवः कर्मपुद्‌गलान् गृह्णाति, ये च तत्र प्रविश्य तत्राधिकारं कुर्वन्ति। अयमेव जीवबन्ध इत्युच्यते। सर्वेषां कर्मणामात्यन्तिकक्षय एव मोक्षो वर्तते[1]। जीवेन सह कर्मणः संयोगवियोगौ दर्शयितुं जैनदर्शने पञ्चपदार्थानां निरूपणं विधीयते। ते च पदार्थाः सन्ति—आस्रव-बन्ध-संवर-निर्जरा-मोक्षाख्याः। एभिर्जीवाजीवमेलनेन पदार्थसंख्या सप्त सञ्जायते। पुण्यपापयोः संयोजनेन तु नव संख्याऽत्र जायते। जैनसम्प्रदाये 'आस्रव'शब्दार्थो वर्तते प्रवाहः। कर्मपुद्‌गलानां जीवं प्रति प्रवाहः। भावास्रव-द्रव्यास्रवभेदेनास्रवस्यापि भवति द्वैविध्यम्।

जीवेषु कर्मोत्पादकरागादिभावानामुदयस्तथा च मानसिक-वाचिक-कायिक-क्रियाणां सङ्कल्पो भावास्रवोऽस्ति, कर्मपुद्‌गलानां जीवं प्रति जायमानप्रवाहस्तु द्रव्यास्रव इत्युच्यते। यदैते कर्मपुद्‌गला जीवं प्रविश्य तमधिकुर्वन्ति तदेयं जीवस्य बद्धसंज्ञा जायते। भावबन्ध-द्रव्यबन्धभेदेन बन्धस्यापि प्रकारद्वयं भवति। कषायस्य कर्मणश्चोदयो भावबन्धो भवति। कर्मपुद्‌गलानां जीवप्रवेशस्तन्निग्रहश्च द्रव्यबन्ध इति संज्ञां लभते। सकृत् कर्मप्रवाहे पतिते कर्मचक्रं निरन्तरं प्रवाहितं जायते। यावदेतेषां निरोधाय चेष्टा न क्रियते, तावत् कर्मप्रवाहोऽयमविरतमनादिरूपेण प्रचलति। स्वप्रयत्नद्वारा करिष्यमाणकर्मनिरोधः 'संवरः' इत्युच्यते। कर्मप्रवाहमार्गस्योद्‌घाटनमास्रवः, मार्गावरोधश्च 'संवरः'। द्वारपिधाने जाते जीवे नवकर्मप्रवेशो न जायते। तत्र स्थितानां प्राचीनकर्मणां विनाशार्थं 'निर्जरायाः' समाश्रयणं विधेयम्। जीवे विद्यमानकर्ममलं दर्शनज्ञानचरित्रस्य घर्षणेन सर्वथा अपसार्यते। एवं रीत्या यदा सर्वसञ्चितकर्मणां बीजानि नश्यन्ति, तदा जीवः स्ववास्तविकस्थितौ समायाति। जैनदर्शनदृष्ट्येयमेव मोक्षस्थितिः। इयमेव च केवलज्ञानप्राप्तिरस्ति[2]। सम्यग्दर्शनज्ञानचारित्राणि मोक्षप्राप्तिसाधनानि वर्तन्ते। जैनमार्गावलम्बिनां कृते

---

१. कृत्स्नकर्मक्षयो मोक्षः—तत्वार्थसूत्रे—१०.३।

२. सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः—तत्त्वार्थसूत्रे १.१।

जिनोक्तशास्त्रसिद्धान्तान् प्रति गभीरा निष्ठा परमावश्यकी। एतदेव सम्यग्दर्शनमित्युच्यते। एतेषां ज्ञानमेव यथार्थज्ञानम्, तथा चैतेषां पालनं सम्यक्चारित्रमित्युच्यते। एतानि त्रीण्यङ्गानि त्रिरत्ननाम्ना विख्यातानि सम्मिलितरूपेण मोक्षमार्गरूपाणि सन्ति। सम्यक्चारित्र्यस्य कृते पञ्चव्रतपालनमावश्यकमस्ति, पञ्चव्रतानि च सन्त्यहिंसासत्यमस्त्येयब्रह्मचर्यापरिग्रहाः। जैनमुनीनां कृते..कठोरतया पञ्चव्रतानां पालनमावश्यकमस्ति। अतो व्रतान्येतानि मुनीनां कृते महाव्रतानि, गृहस्थानां कृते च अणुव्रतानि कथ्यन्ते। गृहस्थानां नियमेषु किञ्चिच्छैथिल्यं विधीयते। तत्कृते ब्रह्मचर्यनियमो धर्मानुकूलकामसेवने परिणतः। मुमुक्षोर्मोक्षाधिगमायानुस्त्रियमाणसाधनामार्गस्य बहूनि सोपानानि सन्ति। जैनदर्शनमेतेषां गुणस्थानमिति विख्याता संज्ञा वर्तते। आहत्यैतेषां चतुर्दश संख्या भवति। एतेषां सम्यगभ्यासेन पुरुषः संयोगकेवलीमसंयोगकेवलीं च स्थितिं विलङ्घ्य मोक्षाख्यां परमां स्थितिं लभते। जैनमतानुसारमात्मस्वरूपे स्थितो जनः सिद्धशिलानामकपवित्रस्थलेऽनन्तचतुष्टयानुभवं कुर्वन् विराजते।

**उपसंहारः**

इत्थं भारतीयदर्शनेषु जैनदर्शनस्य महत्त्वपूर्णं स्थानमस्ति। समस्ते भारतेऽहिंसायाः सन्देशप्रसारणे जैनानामेवास्ति प्रमुखं योगदानम्। ऐतिहासिकदृष्ट्याऽपीत्थमेव प्रमाणितं जायते यज्जैना ईशापूर्वकालत एव 'अहिंसासत्यमस्त्येयब्रह्मचर्यापरिग्रहाः' इत्येतेषां महाव्रतानां प्रचार-प्रसारपरायणा अवर्तन्त। अत एव केचन विद्वांस एवमपि प्रतिपादयन्ति यद् वैदिकानां यो हि अहिंसाभावः सम्प्रति विलोक्यते तस्य मूलं जैना एव। विषयोऽयं महत्त्वपूर्णो विचारणीयश्च वर्तते। विस्तरभयादत्र नाधिकं विचार्यते।

अथ चेशायाः प्रथमशताब्दीतो दशमशताब्दीं यावद् भारतवर्षे बहूनां दर्शनानां प्रचलनमभवत्। परस्परखण्डन-मण्डनप्रक्रियया एतेषां दर्शनानां चरमो विकासः समजायत। खण्डन-मण्डनयोः क्रमो वैदिकावैदिकयोर्द्वैत्यद्वैतिनोर्मध्ये परम्परागतक्रमेण बहूनि वर्षाणि प्राचलत्। दार्शनिकखण्डनमण्डनक्रमे यदा कदा कटुताया भावोऽपि वृद्धिंगतो दरीदृश्यते। अत एव 'हस्तिना ताड्यमानोऽपि न गच्छेज्जैनमन्दिरम्' इति वैदिकानामुक्तिः प्रसिद्धिमवाप। एवमेव बौद्धानां कृतेऽपि—'देवानां प्रिय इति च मूर्खे' इति व्याकरणनियमो व्यरचि तत्प्रतिपक्षिभिः। अस्यां विकटायां विभ्रमकारिण्यां स्थितौ यदि शान्तचेतसा, निश्छलेन मनसा विचिन्त्यते तदा जैनदर्शनस्य महद्वैशिष्ट्यं दृष्टिपथमायास्यति। यतो हि जगति जनानां शास्त्राणाञ्च परस्परं विवादस्यैक एव हेतुर्भवति, स च

सर्वश्रेष्ठत्वसाधनमेव। अपरोऽपि जनः किमपि ब्रूते, तस्यापि मतं समीचीनं भवितुमर्हति तस्मात्तद्वाक्यमपि श्रोतव्यमिति न केनापि सिद्धान्तितम्। जनो मनुते यदहं करोमि तदेव कर्म, यदहं ब्रवीमि स एव धर्मः, यदहमाचरामि तदेवाचरणमिति। जनानां मूढतामिमां सूचयतोक्तं केनापि जैनविदुषा—

हा कीदृग् मूढता हीयं यन्मतं मत्प्रतिश्रुतम्।
सर्वेऽपि प्रतिपद्येरन् संशयीरन्न केचन।।

अयं दोषो जगति प्रच्छन्नतया सर्वत्र व्याप्तो वर्तते। जनः सर्वान् स्वानुकूलान् कर्तुं चेष्टते। विभिन्नधर्मोपासका विश्वसन्ति यत् तद्धर्माचरणेनैव संसारान्मुक्तिर्जायत इति। तेषामेव धर्मग्रन्थाः प्रामाणिका भगवन्मुखात् साक्षात् समुद्भूता इति। यद्यपि शास्त्रकाराः प्रवृत्तिमिमां निन्दन्ति, परमाचरणावस्थायां तेऽपि प्रकृतिनिहता प्रकृतमेवानुसरन्ति। श्रीमद्भगवद्गीतायामासुरव्यवहारस्य लक्षणानीत्थं प्रतिपादितानि—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्।।
असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी।।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्षे दास्यामि मोदिष्य इत्यज्ञानविमोहिताः[१]।।

यद्येतस्य कथनस्य परीक्षणं सम्यक्तया क्रियेत, तदा कियन्तो दैवीसम्पद्युता जना मिलेयुरिति चिन्तनीयो विषयः। अस्यां परमविषमायां परिस्थितावपि जैनदर्शनेन सर्वैः सह मित्रतास्थापनाय महान् प्रयत्नः कृतः। अन्यकथनमपि श्रोतव्यमित्यभिनवः सिद्धान्तो जैनैरेव समाविष्कृतः।

जैनैः स्याद्वादनामकं यत्तत्त्वं जगत्समक्षं प्रस्तुतं तस्योदाहरणं जैनातिरिक्तं क्वापि न लभ्यते। स्याद्वादसाहाय्येन सर्वेषां भारतीयदर्शनानां समन्वयः कर्तुं शक्यते। न केवलं भारतीयदर्शनानामेव, अपि तु जगतीतले या कापि दार्शनिक-समस्या वर्तते, तस्याः समाधानायापि स्याद्वादपद्धतिः सुतरामुपयोगिनी सेत्स्यति। कस्मिन्नपि शास्त्रार्थे वादविवादे वा यदा परस्य पक्षस्य विचारा ध्यानपूर्वकं श्रूयन्ते, तन्मान्यतादिशा तस्यार्थो विचार्यते चेद् ' विरोधाः स्वतः शिथिलाः सन्तोऽस्तं

१. श्रीमद्भगवद्गीता—१६.१३-१५।

गच्छन्ति। विरोधस्यापरं प्रमुखं कारणं भवति स्वदर्शनमान्यतानुसारं परपक्षमूल्याङ्कनम्। यथा वेदान्तदृष्ट्या न्यायमूल्याङ्कनम्। वेदान्तेऽप्यद्वैतदिशा द्वैतमूल्याङ्कनम्। यस्य दर्शनस्य तत्त्वं प्रतिपाद्यते तत्परम्पराभावितनेत्रेण यदि तद् दृश्यते, तदा तत्र विरोधावकाशो नैव जायते। इमां विकटामसमाधेयां दार्शनिक-समस्यामधिकृत्यैव मन्ये जैनैः स्याद्वादस्य समुद्भावना कृता। स्याद्वाद-सिद्धान्तबलादेव कश्चन जैनदार्शनिको वदति—

भवबीजाङ्कुरजनना रागाद्याक्षयमुपागता यस्य।
हरो वा विष्णुर्वा जिनो वा नमस्तस्मै।।

जैनानामेतन्मार्गप्रभावितैर्वैदिकैरपि गौतमो बुद्धश्चतुर्विंशत्यवतारेषु सम्मेलितः। बौद्धाश्च केचन वैदिकान् प्रति—'तेषामल्पापराधस्तु विज्ञानं नित्यतोक्तितः' इति समुद्गिरन्तोऽवलोकिताः। एतस्याः समन्वयात्मकपद्धतेर्जनकास्तु जैना एव। यथोपनिषदि एकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीत्युच्यते, एवमेव जैना अपि स्पष्टमुद्गिरन्ति—

एको भावः सर्वथा येन दृष्टः
सर्वे भावाः सर्वथा तेन दृष्टाः।
सर्वे भावाः सर्वथा येन दृष्टा
एको भावः सर्वथा तेन दृष्टः।।

इत्थं समालोडनेन भारतीयदर्शनेषु जैनदर्शनस्यानितरसाधारणं वैशिष्ट्यं सिध्यति। जैनदर्शनसाहाय्येन भारतीयं दर्शनं विश्वदार्शनिकमञ्चेऽपि कांश्चन महनीयाननुकरणीयांश्च विचारान् समुपस्थापयितुं क्षमते।



# भवभूतिनाट्यसाहित्ये गुम्फिता पर्यावरणचेतना

**डॉ. बालकृष्णशर्मा**
साहित्यविभागाध्यक्ष:
शासकीय-संस्कृत-महाविद्यालय:
ग्वालियरनगरम् (म.प्र.)

***

कविताकामिनीकान्तो मधुरोदात्तपदावलीप्रयोगनिष्णात: पदवाक्यप्रमाण-पारावारीणो गभीरार्थनिर्भररूपकरचनाप्रवीण: सुकुमारकल्पनाकुशलो विपुल-शब्दकोशान्वितो वैदग्ध्यभङ्गिमामण्डित: सहृदयपण्डितो भूतार्थवादी सन्नप्यादर्शवादपोषक: करुणरसपरिपाकपटु: क्रान्तदर्शी लोकपरम्परासमर्थक: संस्कृतसाहित्यविभूति: महाकविभवभूति: सुरभारतीसाहित्यकविष्वन्यतम इत्यत्र नास्ति शङ्काया अवसर:। कविपुङ्गवेनानेन प्रणीतानि महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितमित्याख्यानि त्रीणि रूपकाणि संस्कृतनाट्यसाहित्ये परमप्रथितानि सन्तीति सुविदितमेव सहृदयानां विदुषाञ्च। एतेषु रूपकेषु न केवलं नाट्यवैशिष्ट्यानि कमनीयतया सहृदयहृदयावर्जकरूपे वा विन्यस्तानि सन्ति, अपि तु रसगुणालङ्कारप्रभृतिकाव्यवैशिष्ट्यान्यपि प्रचुरतया प्रभाविरूपेण चोपनिबद्धानि सन्ति। एतेषां रूपकाणां परिशीलनेन प्रतिभाति यत् कविरसौ लोकोत्तरप्रतिभासमन्वितो निसर्गचेतनाचमत्कृतश्च पदे पदे प्रकृतिचित्रणेन सूक्ष्मनिरीक्षणसापेक्षेण प्रमाणयति स्वीयामसामान्यां पर्यावरणचेतनाम्। अत: कवेरस्य नाट्यसाहित्ये गुम्फितां पर्यावरणचेतनामधिकृत्य विवेचनं प्रस्तोतुमेवैष उपक्रम:।

तत्र सर्वप्रथमं विचारणीयमस्ति यत् किमिदं पर्यावरणं नाम? सन्दर्भेऽस्मिन् यदा चिन्तनं क्रियते, तदा प्रतिभाति यदस्मान् परितो यदावरणं तदेव पर्यावरणपदेन संज्ञायते। एतानि तत्त्वानि सन्ति वायुजलपृथ्वीतेजोगगनाख्यानि पञ्चमहाभूतानि, वनस्पतय:, ओषधय:, जलचरखेचरसरीसृपकीटादयो जन्तव:,

पालितपशव:, आरण्यका: पशव:, शिष्टान्यन्यानि च निसर्गजातानि वस्तूनि। एतेषां सर्वेषां समष्टिरेव पर्यावरणं कथ्यते। संस्कृतसाहित्ये वैदिककालादेव पर्यावरणं प्रति काचिदसामान्या चेतना दृष्टिपथमायाति। पर्यावरणचित्रणस्य चेतनेय-मृग्वेदादारभ्याद्यावधि दृश्यते। काव्येषु नाटकेषु वा भवति भूयानवसर: प्रकृतिचित्रणाय येन कविर्यथावसरं यथाप्रसङ्गं वा काव्यनाटकादिषु प्रकृतिचित्रणव्याजेन स्वीयां पर्यावरणचेतनां चित्रयत्यभिनिवेशपूर्वकम्। अनया दृष्ट्या यदा महाकविभवभूते रूपकाणां विमर्शो विधीयते तदा प्रतिभाति यदसौ त्रिष्वेव रूपकेषु प्राचुर्येण विविधप्रकारेण च पर्यावरणचेतनां निरूपयितुं सन्नद्धोऽस्ति। क्वचित्कविरसौ पृथ्वीगङ्गातमसामुरलादीनां जीवच्चित्रणेन, क्वचिद् नदद्गोदावरीवारिवर्णनेन, क्वचिद् भल्लूककृकलासमौकुलिकौशिकप्रभृतीनां जीवजन्तूनां सूक्ष्मनिरीक्षणसापेक्षचित्रणेन, क्वचिद् गिरिकान्तारनिर्झरगह्वरकाननादीनां याथातथ्यप्रस्तुत्या, क्वचित् कुवलयवकुलकुन्दकुब्जकप्रियङ्गुपाटलोत्पलपुण्डरीक-शिरीषजपारविन्दकेसरकेतकीचन्दनकदम्बप्रभृतिपुष्पाणां लतानां वृक्षाणाञ्च चित्रणेन, क्वचित् सूर्यचन्द्ररजनीप्रात:वसन्तशिशिरवर्षाग्रीष्मसीकरतुषारादीनां निबन्धनेन च स्वीयामसामान्यां पर्यावरणनिरीक्षणदक्षतां प्रमाणयति। अयं महाकविर्भवभूतिरेवास्ति यस्य पर्यावरणचेतनया चमत्कृता ग्रावाणोऽपि क्रन्दन्ति, वज्रस्यापि हृदयञ्च दीर्यते। तद्यथा—

'अथेदं रक्षोभि: कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्'[१]।।

श्लोकेऽस्मिन् सन्निहितां भवभूते: पर्यावरणचेतनामेव परिलक्ष्य आर्यासप्तशतीकारो गोवर्धनाचार्यो लिखितवान्—

'भवभूते: सम्बन्धाद् भूधरभूरेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा'[२]।।

वस्तुतो महाकविर्भवभूतिर्निसर्गचेतनानिरीक्षणदक्षो नाटककारोऽस्ति। तस्य शेमुषी पदे पदे तीर्थोदकं वह्निं नैसर्गिकसुरभिसमन्वितकुसुमं पुण्यसलिलां भागीरथीं

१. उत्तररामचरिते–१.२८; २. आर्यासप्तशत्याम्–३६।

कालिन्दीतटस्थश्यामाख्यवटं वैखानसाश्रिततरुतपोवनं सरसनीरां गोदावरीं कुवलयिनो भूमिभागान् श्रितमाल्यवत्पर्वततोयवाहं गृहशकुन्तिकां तरुच्छायां च निरीक्षते, तत्र च सर्वत्र तादात्म्यं स्थापयति, येन कवेः पर्यावरणचेतना परां पदवीमधिरूढा प्रमाणिता भवति। कविरसौ स्वरूपकेषु वनदेवताभागीरथीवसुन्धरा-प्रभृतिपात्राण्यवतारयति, येन तस्य निसर्गचेतना मूर्तिमती प्रतिभाति। सूक्ष्मनिरीक्षण-पटुर्भवभूतिर्वने न केवलं द्रुमान् पश्यति, अपि तु द्रुमेषु कुलायं कुलायेषु कूजत्क्लान्तकपोतादिपक्षिणः, तेषां च व्याकृष्टकीटमुखान्यपि पश्यति। कीदृशी सूक्ष्मनिरीक्षणसापेक्षा पर्यावरणचेतना चित्रिता वर्तते श्लोकेऽस्मिन्—

'कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।
छायापरिकरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः'[१]।।

एवमेव दण्डकारण्यभागान् वर्णयन् कविर्निर्झरतीर्थाश्रमगिरि-सरिद्गर्तकान्तारानपि न विस्मरति। न केवलमेतावत्पर्यन्तं निरीक्षते कविः, अपि तु दण्डकारण्यभागेषु स्निग्धश्यामान् भागान् भीषणाभोगरुक्षान् भागानपि च सहैव गृह्णाति। तद्यथा—

'स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरुक्षाः
स्थाने स्थाने मुखरककुभो झङ्कृतैर्निर्झराणाम्।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः'[२]।।

यदा कविर्जनस्थानप्रान्तभागान् वर्णयति तदा न केवलं नीरवतां प्रोच्चण्डसत्त्वरवं वा स्मरति, अपि तु स्वेच्छासुप्तगभीरभोगभुजगान् तेषां श्वासप्रदीप्ताग्नि तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवपानमपि न विस्मरति। तद्यथा—

'निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते'[३]।।

---

१. उत्तररामचरिते–२.९; २. तत्रैव–२.१४।
३. तत्रैव–२.१६।

अत्र सूक्ष्मनिरीक्षणदक्षा कवेर्दृष्टिः प्रदरोदरेषु विद्यमानं स्वल्पं जलमपि ग्रहीतुं शक्नोति, का कथा पुनः विशालवस्तूनां ग्रहणस्य वर्णनस्य वा? एवमेव निर्झरिणीनां वर्णनावसरे कविः समदखगाक्रान्तवानीरलतामेव केवलं न स्मरति, अपि तु तासां पुष्पगन्धैः सुरभितशीतलस्वच्छजलमपि स्मरति फलभरपरिणाम-श्यामजम्बूकनिकुञ्जानपि चोल्लिखति। तद्यथा—

'इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः'[१]।।

अत्रैव प्रकृतेः कोमलकठोरोभयो रूपयोर्वर्णने समानरूपेण दक्षो महाकविर्भवभूतिरेकत्र कुहरभाजां भल्लूकयूनामम्बूकृतानि सूक्ष्मेक्षिकया वर्णयति, अपरत्र च सल्लकीनां शिशिरकटुकषायमिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धं कमनीयतया सफलतया च निबध्नाति, येन तस्य प्रकृष्टा पर्यावरणचेतना पदं प्राप्नोति। यद्यथा—

'दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः'[२]।।

एकत्र पर्यावरणनिरीक्षणचमत्कृतचित्तः कविः खगानां कोयष्टिकपूर्णिका-दात्यूहकुक्कुभादीनां सूक्ष्मनिरीक्षणसापेक्षं वर्णनं कुर्वन् स्वकीयां परिपक्व-पर्यावरणचेतनां प्रमाणयति। तद्यथा—

'काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपःपूर्णिकाः।
दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुभाः'[३]।।

१. उत्तररामचरिते–२.२०, महावीरचरिते–५.४०।
२. उत्तररामचरिते–२.२१, महावीरचरिते–५.४१, मालतीमाधवे–९.६।
३. मालतीमाधवे ९.७।

अन्यत्र महाकविरसौ क्रौञ्चावतगिरिं वर्णयन् कूजत्कुञ्जकुटीरकौशिकघटाघूत्कारं तु स्मरत्येव कीचकस्तम्बाडम्बरमूकमौकुलिकुलमपि न विस्मरति। अपि चात्रैव प्रचलतां प्रचलाकिनां कूजितैरुद्वेजितान् पुराणरोहिणतरुस्कन्धेषु उद्वेल्लनपरान् कुम्भीनसान् अपि अभिनिवेशपूर्वकं प्रस्तौति। तद्यथा—

'कूजत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिततरुस्कन्धेषु कुम्भीनसाः'[१]।।

अपि च गद्गदनदद्गोदावरीवारिकुहरान् मेघालम्बितमौलिनीलशिखरान् दाक्षिणान् पर्वतानत्रैव स्मरति कविः, अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोल-कोलाहलैरुत्तालान् गभीरपयसः पुण्यसरित्सङ्गमान् च न विस्मरति, येन कविहृदयनिष्ठा नदीपर्वतविषयिका पर्यावरणचेतना सुष्ठुरूपेणाभिव्यक्ता भवति। तद्यथा—

'एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दाक्षिणाः।
अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः'[२]।।

पर्यावरणघटकानां नदीपर्वतकाननादीनां सूक्ष्मनिरीक्षणपटिष्ठो महा-कविर्भवभूतिः प्रकृतेः परिवर्तनान्यपि सूक्ष्मेक्षिकया गृह्णाति प्रस्तौति च। तद्यथा—

'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति'[३]।।

---

१. उत्तररामचरिते–२.२९, मालतीमाधवे–५.१९।
२. उत्तररामचरिते–२.३०।
३. तत्रैव–२.२७।

अनेन प्रकारेण प्रतिभाति यद् महाकविर्भवभूतिः पर्यावरणचेतना-भावितहृदयो भूत्वा पदे पदे यथाप्रसङ्गं प्रकृतिचित्रणं पर्यावरणघटकजलवायुप्रभृतीनां विन्यासं लतापादपपुष्पफलमूलौषधिप्रभृतीनां कमनीयवर्णनं जलचरखेचर-भूचरजीवजन्तूनां सरीसृपादीनां निबन्धनं नदीपर्वतनिर्झरकाननादीनाञ्च सहृदयहृदयाह्लादिकामभिव्यक्तिं करोति त्रिष्वेव स्वरूपकेषु, येनास्य रूपकसाहित्यं पर्यावरणचेतनानिर्भरं प्रतिभाति। कवे रूपकेषु समुपनिबद्धां पर्यावरणचेतनां नैकेषु वर्गेषु पृथक्कृत्य प्रस्तोतुं शक्यते। तद्यथा—(१) महाभूतसम्बद्धा पर्यावरणचेतना, (२) प्राणिजातसम्बद्धा पर्यावरणचेतना, (३) वनस्पतिजातमोषधिजातञ्चाधिकृत्य विन्यस्ता पर्यावरणचेतना, (४) निसर्गघटकजातसम्बद्धा पर्यावरणचेतना, (५) शिष्टवस्तुजातसम्बद्धा पर्यावरणचेतना च। अत्र समासेनैतेषामेकैकशः सोदाहरणं विवेचनं प्रस्तूयते।

**महाभूतसम्बद्धा पर्यावरणचेतना**

निखिलनिसर्गसर्गः प्रधानतया स्थूलरूपेण वा पञ्चमहाभूतात्मको भवति। पञ्चमहाभूतेषु भूमिजलाग्निवायुगगनानां गणना क्रियते। पर्यावरणघटकेषु पञ्चमहाभूतानामेतेषां विद्यते प्राधान्यम्। एतावता यदा पर्यावरणचेतनामधिकृत्य चिन्तनं विधीयते तदा पञ्चमहाभूतानां प्रसङ्गः प्राथम्येनोपस्थितो भवति। महाकविभवभूतिः स्वरूपकेषु पञ्चमहाभूतानां चित्रणे तैः सम्बद्धां पर्यावरणचेतनाञ्च स्वीयां प्रस्तोतुं सन्नद्धः प्रतिभाति। तस्य जलविषयिका चेतना वह्निविषयिका च चेतना एकत्रैव श्लोकेऽस्मिन् विन्यस्ते स्तः। तद्यथा—

'उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः'[१]।।

एवमेवोत्तररामचरितनाटके कविः सीतासंरक्षणतत्परां पृथिवीं गङ्गाञ्च प्रस्तौति येन तस्य धराविषयिका पर्यावरणचेतना जलविषयिका च पर्यावरणचेतना स्फुटीभवतः। पृथिवीभागीरथ्योः कथनेऽस्मिन् भवभूतिः स्वीयां पृथ्वीजलविषयिकां चेतनां सुष्ठुरूपेण निबध्नाति। तद्यथा—

'जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।
आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते'[२]।।

१. उत्तररामचरिते–१.१३।
२. तत्रैव–७.८।

एकत्र नाटकेऽस्मिन् कविः शीकरक्षोदशीतं पद्मकिञ्जल्कगन्धाकर्षणपरं वीचीवायुं चित्रयन् स्वीयां वायुविषयिकां पर्यावरणचेतनां प्रस्तौति। तद्यथा—

'वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान्।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेरितैस्तर्पयेति'[१]।।

एवं प्रकारेण प्रतीयते यत् कविरसौ पर्यावरणचेतनाचित्रणनिष्णातः क्वचिज्जलस्य दैवीं महत्तां प्रतिपादयति, क्वचिद् धराया लोकोत्तरमाहात्म्यं प्रस्तौति, क्वचिच्च वसुन्धरावायुगगनानां चमत्कारं निरूपयति येनास्य पञ्चमहाभूतविषयिका पर्यावरणचेतना परिपुष्टा भवति।

**प्राणिजातान्विता पर्यावरणचेतना**

संस्कृतकवयः प्राणिजातमधिकृत्य वृत्तनिबन्धने सदैव तत्परा दृश्यन्ते। तेषां हृदये मनसि वा प्राणिवर्गं प्रति परा संवेदना विराजते। ते बलाकावर्णनेन राजहंसवर्णनेन वा वर्षां व्यञ्जयन्ति, भल्लूकघूत्कारेण काननस्य भयानकत्वं निरूपयन्ति, कोकिलरवेण वसन्तस्यागमनं वर्णयन्ति, मयूरनृत्यनिबन्धनेन घनसञ्चरणं प्रस्तुवन्ति, कुलायं प्रति आगच्छतः खगान् वर्णयित्वा दिनावसानं सूचयन्ति, खगकलरववर्णनेन निशावसानं ख्यापयन्ति, चतुष्पदखगसरीसृपादीनां व्याकुलतावर्णनव्याजेन निदाघतीक्ष्णतां च ज्ञापयन्ति। एवमेव संस्कृतकवयोऽरण्यतपोवनवर्णनप्रसङ्गेषु मृगादीनां नदीतडागादीनां वर्णनप्रसङ्गेषु मत्स्यमकरादीनां वाटिकोद्यानादीनां वर्णनप्रसङ्गेषु विविधखगानां शैलकाननादीनां वर्णनप्रसङ्गेषु सिंहशार्दूलादीनां लतापादपादीनां वर्णनप्रसङ्गेषु चान्यानेकजीवानां वर्णनं प्रस्तुवन्ति।

साहित्येऽस्मिन् मयूराणां नर्तनं सिंहानां गर्जनं गजानां चीत्कारो भल्लूकानां घूत्कारो द्विजिह्वानां फूत्कारो हंसानां क्रेङ्कारो मृगाणां धावनं मर्कटानां कूर्दनं कोकिलानां कूजनं भ्रमराणां गुञ्जनं दर्दुराणां सम्प्लुतिश्चातकानां नदनं च परमप्रथितानि सन्ति। अनेन संस्कृतकवीनां प्राणिजातान्विता पर्यावरणचेतना सम्यग्रूपेण विशदीभवति। महाकविभवभूतिविरचितानां रूपकाणामध्ययनेन तथ्यमिदं भृशं स्पष्टं भवति। एष कविः क्वचित् करिकलभकेलिं निबध्नाति, क्वचित् मयूरनर्तनं प्रस्तौति। एकत्र हरिणहृदयावर्जकतां निबध्नाति, अपरत्र च मल्लिकाक्षपक्षव्याधूतिं वर्णयति भवभूतिः। सूक्ष्मनिरीक्षणदक्षः कविर्यदा कलभवर्णनं करोति तदा तस्य गण्डूषसङ्क्रान्तिं तु निबध्नात्येव

१. उत्तररामचरिते-३.२।

स्नेहादनरालनालनलिनीपत्रातपत्रधारणकलामपि न विस्मरति। यथा पद्येनानेन प्रमाणितं भवति—

'लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसङ्क्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम्'[१]।।

अनेनैव प्रकारेण कविः स्वरूपकेषु प्रसङ्गानुसारेण गजवधूवृकमातङ्गफेरव-कूर्माजगरकौशिकराजहंसकोकिलश्येनवर्तिकादात्यूहकोयष्टिकपूर्णिकाकपोतकुक्कुभ-मल्लिकाक्षशिखण्डीगोलाङ्गूलचकोरकुररसारसप्रभृतिपशुपक्षिणां जीवजन्तूनां वा सूक्ष्मेक्षिकया वर्णनं निबध्नाति येन तस्य प्राणिजातान्विता पर्यावरणचेतना परिपुष्टा भवति। नीलकण्ठचकोरगोलाङ्गूलानामेकत्र वर्णनकारिपद्यमधोलिखित-मनुशीलनीयमत्र। तद्यथा—

'केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः
कान्तामन्तःप्रमोदादभिसरति मदभ्रान्ततारश्चकोरः।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः
कं याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः'[२]।।

एवमेव कविरसौ वलीवदनवर्णनपरस्तस्य मुखलौहित्यं दन्तमाल-मोष्ठारुणिमरञ्जितञ्च वर्णयत्येव, सहैव प्रणयव्यापारमपि कमनीयतया सहजतया च प्रस्तौति। तद्यथा—

'दन्तच्छदारुणिमरञ्जितदन्तमाल-
मुन्नम्य चुम्बति वलीवदनः प्रियायाः।
काम्पिल्यकप्रसवपाटलगण्डपालि-
पाकारुणस्फुटितदाडिमकान्तिवक्त्रम्'[३]।।

एवं प्रकारेण प्रतिभाति यद् महाकविर्भवभूतिर्जीवमनोविज्ञानस्य वेत्ता तेषां प्रवृत्तीनां सूक्ष्मनिरीक्षणदक्षश्चास्ति। अत एव सः पदे पदे स्वरूपकेषु सत्त्वानां

१. उत्तररामचरिते–३.१६, मालतीमाधवे–९.३४।
२. मालतीमाधवे–९.३०।
३. तत्रैव–९.३१।

सहजक्रियाकलापानां मनोहारिवर्णनं प्रस्तौति। अनेन कवेः सत्त्वविषयिणी चेतना मुखरीभवति। अयं मयूराणां नर्तनं दृष्ट्वा नृत्यति कलभहावभावान् दृष्ट्वा रमते खगकलरवं श्रुत्वा प्रसीदति वन्यजीवानां भयोत्पादकनादं श्रुत्वा मोदते मर्कटकेलिमवलोक्य हसति कृकलासाजगरादिप्रवृत्तिं विलोक्य चिन्तयति सर्वैरेभिर्जीवैश्च स्वकीयं तादात्म्यं स्थापयति, ज्ञापयति च सत्त्वाश्रितां पर्यावरणचेतनाम्। सत्त्वानां सूक्ष्मनिरीक्षणे पटुर्महाकविर्भवभूतिस्तेषां प्रवृत्तीनां केलिव्यापाराणां हावभावानां च वर्णनं करोत्येव, तथा च तेषां व्याध्यादीनामपि सङ्केतं ददाति। तद्यथा कूटपाकलाख्यं गजव्याधिं निर्दिशन् कविर्मकरन्दाश्रयेण वदति—

'अभिहन्ति हन्त कथमेष माधवं सुकुमारकायमनवग्रहः स्मरः।
अचिरेण वैकृतविवर्तदारुणः कलभं कठोर इव कूटपाकलः'[१]।।

समासेन वक्तुं शक्यते यद् भवभूतिः सत्त्वचेतनाभावितहृदयः कविरस्ति, येन तस्य रूपकेषु प्राणिजातान्विता पर्यावरणचेतना प्राचुर्येण समुपनिबद्धाऽस्ति।

**वनस्पत्यौषधिजातान्विता पर्यावरणचेतना**

निसर्गचेतनाचमत्कृते संस्कृतसाहित्ये पर्यावरणोपादानीभूतवनस्पत्यौषध्यादिषु तत्तदभिमानिदेवानां सद्भावोऽभ्युपगतोऽस्ति। यथा प्रसिद्धवेदभाष्यकारः सायणाचार्यो ब्रूते—

'ओषध्यादिमन्त्रेष्वपि चेतना एव तत्तदभिमानिदेवतास्तेन नाम्ना सम्बोध्यन्ते'[२]।

अतः संस्कृतकवयः विविधवनस्पतीनां वर्णनव्याजेन कन्दमूलफलौषधीनां वर्णनव्याजेन स्वकीयां वानस्पतिकचेतनामेव चित्रयन्ति। महाकविर्भवभूतिरपि स्वरूपकेषु एवमेव करोति। सः स्थाने स्थाने प्रसङ्गानुसारेण बकुल-काञ्चनपादप-कुन्द-कुब्जक-प्रियङ्गु-बालचूत-विसिनीपत्र-कमलिनीकन्द-पाटल-चूतप्रसून-उत्पल-पुण्डरीक-अतिमुक्तक-खर्जूर-रोहिण-शिरीष-कदलिका-ताम्बूल-वेत्रलता-हरिचन्दन-शैवल-मृडाल-पूगद्रुम-कक्कोलीफल-जपा-अरविन्द-केसर-ताली-केतकी-उत्पल-अश्वकर्ण-सरल-मालूर-कदम्ब-जम्बू-सल्लकी-काश्मरी-अश्मन्तक-तिनिश-वानीर-यूथिका-कुटज-शिलीन्ध्र-लोध्र-अर्जुन-सर्ज-तमाल-काम्पिल्यक-दाडिम-वटप्रभृति-

१. मालतीमाधवे–१.४०।
२. ऋग्वेदभाष्यभूमिकायाम्, (डॉ. हरिदत्तशास्त्रिणः संस्करणे), पृ. १९।

फलवृक्षाणां पुष्पपादपानां काष्ठप्रदायकवृक्षाणां लतानां मूलानामोषधिप्रदायकानाञ्च पादपानां वर्णनं करोति, येन तस्य वानस्पतिकचेतना पदे पदे मुखरीभवति। एष कविः शृङ्गवेरपुरस्थमिङ्गुदीपादपं तु स्मरत्येव भरद्वाजावेदितचित्रकूटयायिनि वर्त्मनि कालिन्दीतटस्थं श्यामाख्यं वटमपि न विस्मरति। तद्यथा—

'इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनासीत् समागमः'[१]।।

अपि च—'लक्ष्मणः—अयमसौ भरद्वाजावेदितचित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम'[२]।

अन्यत्र कविर्विविधवनस्पतीनामुल्लेखं कुर्वन् दण्डकारण्यभूधरान् स्मरति। तद्यथा—

'एताश्चन्दनाश्वकर्णसरलपाटलाप्रायतरुगहनाः परिणतमालूरसुरभयोऽरण्यगिरिभूमयः स्मारयन्ति तरुणकदम्बजम्बूवनावबद्धान्धकारगुरुगिरिनिकुञ्जगुञ्जद्गम्भीरगद्गदोद्गारघोरघोषणगोदावरीमुखरितविशालमेखलाभुवो दक्षिणारण्यभूधरान्'[३]।

भारतदेशेऽस्मिन् आयुर्वेदविशारदा वानस्पतिकचेतनाभाविता यत्र तत्र विविधौषधीनामन्वेषणं कुर्वन्ति वनपर्वतादिषु, येनात्र ध्यानपूर्वकविचयनकार्यस्य तुलना ओषधिविचयनकार्येण क्रियते। महाकविर्भवभूतिरपि महावीरचरिते ओषधिविचयनकार्यमुल्लिखति। तद्यथा—

'यामोषधिमिवायुष्मन् विचिनोषि महावने।
सा सीता मम च प्राणा रावणेनोभयं हृतम्'[४]।।

एवं प्रकारेण प्रतिभाति यद् महाकविर्भवभूतिर्विविधवनस्पतीनामोषधीनां वा विषये परां चेतनामधिकरोति, येन तस्य रूपकेषु वनस्पत्यौषधिजातान्विता पर्यावरणचेतना प्राचुर्येणोपलभ्यते।

## निसर्गघटकजातसम्बद्धा पर्यावरणचेतना

सम्पूर्णेयं स्थूला सृष्टी रजनीदिवसान्धकारप्रकाशप्रातःसन्ध्यामध्याह्नरात्रिवसन्तग्रीष्मवर्षाशरद्हेमन्तशिशिरघर्मतुषारसीकरसूर्योदयसूर्यास्तचन्द्रोदयचन्द्रास्तप्रभृति-

---

१. उत्तररामचरिते–१.२१; २. तत्रैव–१.२३ अनन्तरम्।
३. मालतीमाधवे–९.३ अनन्तरम्; ४. महावीरचरिते–५.२४।

निसर्गघटकैः सङ्कुलिताऽस्ति। अतः संस्कृतकवयो यथास्थानमेतेषां वर्णनं कुर्वन्ति। महाकविर्भवभूतिरपि स्वरूपकेषु चन्द्रसूर्यतुषारसीकरघर्मादीनां मञ्जुलनिबन्धनं करोति, येन तस्य निसर्गघटकजातान्विता पर्यावरणचेतना विशदीभवति। महाकवेरस्य मनसि सूर्यं प्रति महती निष्ठा वर्तते। अत एव स सर्वेषु रूपकेषु सूर्यमधिकृत्य स्वभावाननेकत्र व्यञ्जयति। एवमेव प्रकृतेः सूक्ष्मपर्यवेक्षणपटोः कवेर्मनः सीकरवर्णने भृशं रमते। एकत्र बालचन्द्रोदयवर्णनव्याजेन कविर्माधवं वर्णयति। तद्यथा—

'तत उदयगिरेरिवैक एष स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतुर्नयनवतामुदियाय बालचन्द्रः'[१]।।

कवेः सूक्ष्मेक्षिकादृष्टी राजमार्गस्य निशीथनिःसञ्चाररमणीयतां तु वर्णयत्येव तदानीन्तनं वलभीतुङ्गवातायनेषु प्राप्तामोदं परिणतसुरागन्धसंस्कारगर्भं मुहुरुपचितस्फीतकर्पूरवासं वातमपि न विस्मरति। तद्यथा—

'प्रासादानामुपरि वलभीतुङ्गवातायनेषु
प्राप्तामोदः परिणतसुरागन्धसंस्कारगर्भः।
माल्यामोदी मुहुरुपचितस्फीतकर्पूरवासो
वातो यूनामभिमतवधूसन्निधानं व्यनक्ति'[२]।।

एवं प्रकारेण प्रमाणितं भवति यद् भवभूतेर्निसर्गघटकजातान्विता पर्यावरणचेतना परमसूक्ष्मा परमपृथुला चास्ति। एतेषु वर्गेषु वर्णितानि वस्तूनि तत्त्वानि वा विहाय कानिचिदन्यानि शिष्टानि तत्त्वान्यपि महाकविभवभूते रूपकेषु निबद्धानि तस्य पर्यावरणचेतनां प्रमाणयन्ति। यथा श्मशानवर्णनं शवभक्षणवर्णनं वा। एकत्र कविश्चिताधूमस्य तत्रत्यगन्धस्य च वर्णनं कुर्वन् ब्रूते। तद्यथा—

'इदं च पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनकरसगन्धिभिश्चिताधूमैरधस्ताद्विभावितस्य श्मशानवाटस्य नेदीयः करालायतनम्'[३]। एवमेवान्यत्र कविराश्रमेषु सर्पिष्मतो भक्तस्य गन्धं स्मरत्यपि च कर्कन्धूफलमिश्रशाकपचनामोदं न विस्मरति। तद्यथा—

१. मालतीमाधवे–२.१०।
२. मालतीमाधवे–७.५।
३. तत्रैव–५.४. अनन्तरम्।

'नीवारौदनमण्डमुष्णमधुरं सद्यः प्रसूताप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते'[१]।।

एवं समासेन वक्तुं शक्यते यद् महाकविर्भवभूतिः पर्यावरणचेतनाचित्रणाय नैकानवसरान् कल्पयति, अभिनिवेशपूर्वकञ्च पर्यावरणचेतनां निबध्नाति। अत्र स्थालीपुलाकन्यायेन केषाञ्चन स्थलानां विमर्शो विहितोऽस्ति, येन दृष्ट्याऽनया भवभूतेः परिशीलनस्य क्रमः प्रसरेदिति शम्।



१. उत्तररामचरिते–४.१।

# भारविविशाखदत्तयो राजनीतिकदृष्टिः

**डॉ. दुर्गाप्रसादमिश्रः**
डी. ३६/८३ बी., अगस्तकुण्डम्
वाराणसी

***

भारविविशाखदत्तयोरुभयोरपि स्वकीयकाव्ये प्रतिपाद्यं वस्तु राजनीतिरेवास्ति। उभयोरपि किरातार्जुनीये मुद्राराक्षसे च काव्ये विशेषेण कौटिलीयार्थशास्त्रस्यैव समावेशोऽस्तीति नास्त्यत्र विवादविषयता। तत्राधुनिकराजनीतिसंस्पर्शोऽस्तीति तदीयग्रन्थावलोकनेन निश्चेतुं शक्यमेव। तथा हि आधुनिकराजनीतौ पक्षविपक्षौ स्तः। तत्र पञ्चसंवत्सरपर्यन्तं पक्षो राजधुरां सञ्चालयति। विपक्षोऽपि पक्षस्य क्रियामालोकयन् स्वीयभूमिं निर्वाहयति। सत्तापक्षः प्रायेण स्वीयोत्कर्षसंसाधनाय स्वीयराज्ये प्रजानामभ्युन्नत्यै कार्याणि करोति। प्रजानां हर्ष एव तस्य प्रयासो भवति, येनासौ विपक्षाय राज्यवैमुख्यमेव सम्पादयेत्। इयं दृष्टिर्भारवेर्विशाखदत्तस्याप्यस्ति। तथा हि किरातार्जुनीये विपक्षभूमौ पाण्डवाः सन्ति। राज्यं तु दुर्योधनस्य हस्ते निपतितं वर्तते।

दुर्योधनः स्वीयकौशलेन सर्वप्रकारेण राज्यसञ्चालनाय व्यापृतो वर्तते। स सर्वदा युधिष्ठिराद् भीतस्तं नयेन जेतुमिच्छति जगतीमपि। तेनासावालस्यं त्यजति। मनुप्रतिपाद्यं राजनीतिधर्ममङ्गीकरोति। अग्निहोत्रादिकं धार्मिकं कृत्यं सम्पादयति। तत्रापि तस्यालस्यं न भवति। तस्य शासनं तावद् मनोहरमासीत्। नृपैरपि शिरोभिर्माल्यमिवोह्यते। तस्य सैन्यसङ्घटनमपि बलवदासीद् यत्र महौजस्का मानधनाः प्राप्तयुद्धकीर्तयः सम्पत्तर्पिता धनुर्धारिणो भेदवृत्तिरहिता सेनानायकास्तस्य प्राणैरपि प्रियाणि वाञ्छन्ति। तत्र राज्यसञ्चालने तस्योपमा महेन्द्रेण कृता वर्तते। तस्य जनपदे प्रजाः सस्याय केवलं दैवाश्रिता नासन्, अपि तु अदेवमातृकास्ता आसन्, येन वृष्ट्यभावेऽप्यन्योपायैः सस्यसम्पत्तिः सम्पादयितुं शक्यत एव।

अर्थसम्पदोऽपि तस्य पूर्णा एवासन्। तत्तत्पदेषु विनियोगोऽपि पुरुषाणां सम्यगासीत्। तस्य सम्पदो भृत्याधीनाः कृताः कृतज्ञतामेव वदन्ति स्म।

दण्डविषयेऽप्यसौ धैर्यमाश्रित्यैव कार्यकारी आसीत्। तत्र गुरूपदिष्टमार्गमेवाश्रित्य रिपौ सुते वा दण्डविषये तस्य समचित्तताऽऽसीत्। इत्थं युधिष्ठिरादपि उपरि यातुमिच्छन् दुर्योधनो राज्ञां सर्वानेव गुणान् धारयन्नासीत्। अस्मिन् विषये प्रथमसर्गस्य वनेचरस्य युधिष्ठिरं प्रति वचनान्याकलनीयानि सन्ति। तत्रैतत् श्लोकद्वयं द्रष्टव्यम्[१]—

'विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः।
दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः।।
तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः।
समुन्नयन् भूतिमनार्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः'[१]।। इति।

एतच्छ्लोकद्वयेन साम्प्रतिकराजनीतिपरम्परा स्पष्टं सम्यक्त्वमुपैति। वस्तुतः सर्वदोषाकरोऽपि सुयोधनो युधिष्ठिरस्पर्धया पापं कर्म प्रजापीडनादिकं न करोति, केवलं सत्कर्म कुर्वन् प्रजाः पुत्रानिव पालयन् धर्मविप्लवं दण्डेन परिहरन् लोकानां हृदयान्यावर्जयन्निव केवलं यशस एव विस्तारं करोति।

किं बहुना, प्रजाः स्वं श्रेष्ठं राजानमिव दर्शयन्नसौ नीतिसाहाय्येन जगतीमपि जेतुमिच्छति। तथा चायं श्लोक आकलनीयोऽस्ति—

'कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना।
विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम्'[२]।।इति।

भृत्यानां हृदयान्यावर्जयितुं किं करोत्यसावित्युच्यते—

'सखीनिव प्रीतियुजोऽनुजीविनः
समानमानान् सुहृदश्च बन्धुभिः।
स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम्'[३]।।इति।

---

१. किरा. १.७-८।
२. तत्रैव-१.९।
३. तत्रैव-१.११।

अपि च—

'निरत्ययं साम न दानवर्जितं न भूरिदानं विरहय्य सत्क्रियाम्।
प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया'[१]।।

इत्यनेन दुर्योधनराज्ये गुणानामेव पूजाऽऽसीदिति भ्रष्टाचारस्य लेश एव नासीत्। कथम्? युधिष्ठिरस्पर्धयैवेति ब्रूमः। तेन दुर्भिक्षस्य, मरणस्य, भयस्य च नास्ति लेशः। यतो हि—

'अपूज्या यत्र पूज्यन्ते पूज्यानामवमानना।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम्'[२]।।

इति वस्तुनोऽभाव एवासीत्। इत्थं सर्वविधा चेष्टा दुर्योधने राज्यसञ्चालनाय प्रशस्ता एवासन्। अतन्द्रितो दुर्योधनो नक्तन्दिवं विभज्य प्रवर्तमानश्चारव्यवस्थामपि सम्यक् कृतवान्। असौ चारै राज्ञां क्रियाः सम्यग् वेत्ति, यतो हि तस्य गुप्तचराः सच्चरिता आसन्। तथा हि महाकविर्वनेचरमुखेन प्रस्तौति—

'महीभृतां सच्चरितैश्चरैः क्रियाः
स वेत्ति निःशेषमशेषितक्रियः।
महोदयैस्तस्य हितानुबन्धिभिः
प्रतीयते धातुरिवेहितं फलैः'[३]।।

अत्राशेषितक्रिय इति दुर्योधनस्य विशेषणं राज्ञः सर्वगुणवत्तामेव ख्यापयति। इत्थमुक्तप्रकारेण भारवेर्दृष्टिः साम्प्रतिकी एवास्तीति प्रकरणं साम्प्रतिकराजनीतिविदां प्रेरणाप्रदमेवास्ति। अपि च द्वितीयसर्गे राजानं प्रत्युपादेयवचनं सर्वथा प्रासङ्गिकमस्ति। तत्र प्रकृतिप्रकोपेन जायमानो विग्रहो राज्ञां बलवद्भेदकत्वेन प्रदर्शितोऽस्ति। यथोक्तं महाकविना—

'अणुरपि उपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः'[४]।।इति।

एतदपि साम्प्रतिकराजनीतावुपलभ्यते प्रायः प्रधानमन्त्रिणो मुख्यमन्त्रिणश्च प्रकृतिप्रकोपेण समूलं लीयमाना इव दरीदृश्यन्ते। तत्र राजानं प्रति

१. किरा., १.१२;
२. पञ्चतन्त्रे।
३. किरा., १.२०;
४. तत्रैव, २.५१।

मदादीनामानर्थक्यप्रदर्शनद्वारा तद्राहित्योपदेशः सुतरां प्रासङ्गिकोऽस्ति। तेनैव च राज्ञां सुदृढा स्थितिः सम्भावयितुं शक्यते। तथा हि मदस्यानर्थहेतुत्वं युधिष्ठिरमुखेन कविः ख्यापयति—

'मदमानसमुद्धृतं नृपं न वियुङ्क्ते नियमेन मूढता।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः।।
अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः।
सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितुं महानपि'[1]।।इति।

युद्धविषयेऽपि व्यूहसञ्चालनादिकं सैन्यगमनादिकञ्च सम्यक्तया प्रतिपाद्यते चतुर्दशसर्गे। पञ्चदशसर्गे च पलायमानं सैन्यं प्रति पुनस्तदुत्साहवर्धनाय सेनापतेरोजस्विवचनमस्ति। एतद्द्वयमपि सम्प्रत्यपि राजनीतिविषये सम्यग्भूमिकां निर्वाहयति। राज्ञां मैत्रीविषये कवेर्दृष्टिरात्यन्तिकी समीचीना वर्तते। मैत्रीविषये सकृदपि स्खलनं राज्ञामनर्थायोपकल्पते। अतो मैत्री सम्यक् परीक्ष्य कर्तव्या। किं बहुना, नीचं जनं राजाऽवज्ञयाऽवहेलयत्विति कवेः शासनं भवति। तथा हि प्रसिद्धं पद्यम्—

'यदा विगृह्णाति हतं तदा यशः
करोति मैत्रीमथ दूषिता गुणाः।
स्थितिं समीक्ष्योभयतः परीक्षकः
करोत्यवज्ञोपहतं पृथग्जनम्'[2]।।

अपि च 'भवन्ति गोमायुसखा न दन्तिनः' इति प्रसिद्धा सूक्तिः असन्मैत्रीं प्रतिषेधति। इत्थमेव राजानं प्रति जितेन्द्रियत्वस्यात्यन्तमुपादेयत्वमपि कवेराशयोऽस्तीति निश्चीयते। किं बहुना, यदि राजा जितेन्द्रियोऽस्ति, तदा तं शत्रुर्न जेतुं पारयति। पराऽऽत्माभिरक्षा जितेन्द्रियतैवास्तीति कवेरुद्घोषः। तथा ह्युक्तम्—

'प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा'[3]।।इति।

---

१. किरा., २.४९-५०।
२. तत्रैव, १४.२४।
३. तत्रैव, १०.३५।

इत्थं राजनीतिं प्रति भारवेर्दृष्टिरत्यन्तं सूक्ष्माऽस्तीति ज्ञायते। मुद्राराक्षसेऽपि सर्वत्रैव राजनीतिविधा दृश्यते। तत्रापि राजान्तरं न्यक्कृत्य प्रतिष्ठितस्यापरस्य राज्ञः प्रजाः प्रति स्वकीयविश्वासदार्ढ्याय यत् प्रेमप्रवणत्वमपेक्षितं वर्तते, तदपि स्पष्टं विलोक्यते। तथा हि प्रथमसर्ग एव राज्ञश्चन्द्रगुप्तस्य प्रकृतिरञ्जकत्वं दृश्यते। चाणक्यः स्वसमीहितसाधनाय राक्षसस्य मित्रं चन्दनदासमाहूय पृच्छति— चन्द्रगुप्तस्य राज्ञो दोषा अतिक्रान्तपार्थिवगुणान् प्रकृतीः स्मारयन्ति? इति, तदा चन्दनदासो निजकर्णौ पिधाय कथयति—'शान्तं पापम्। शारदनिशासमुद्‌गतेनेव पूर्णिमाचन्द्रेणाप्यनुश्रियाऽधिकं नन्दन्ति प्रकृतयः'[१] इति वचनेनैव प्रकृतिरञ्जकत्वं तथा—

'भो श्रेष्ठिन्! चन्द्रगुप्तराज्यमिदं न नन्दराज्यम्। यतो नन्दस्यैवार्थरुचेरर्थ-सम्बन्धः प्रीतिमुत्पादयति, चन्द्रगुप्तस्य तु भवतां परिक्लेश एव'[२]। इति वचनेन चाणक्यश्चन्दनदासं चन्द्रगुप्तस्यालोभित्वख्यापनेन तथा नन्दस्य सलोभत्व-दोषवत्त्वख्यापनेन चन्द्रगुप्तस्य नन्दाद् गुणाधिक्यमेव ख्यापयति, येन वणिग्-वर्गोऽपि राजानुकूलो भवतु। वणिग्वर्गस्य राजानं प्रति धनदानादिना महानुपकार आसीदिदानीमपि तथैव दृश्यते। अस्मिन् विषये 'कियदस्माज्जनादिष्यते'[३] इति चन्दनदासवचनं प्रमाणम्। यतो हि चन्दनदासः 'उक्तवचनेन चाणक्यं स्वाभीष्टद्रव्यराशिर्मत्तो ग्रहीतुं शक्यते' इति कथयति। राज्ञामपि वणिक्समुदाये तथैव कृपा आसीत्। तत्तु 'आर्यस्य प्रसादेनाखण्डिता मे वाणिज्या, इति चन्दनदासवचनेन निश्चीयते। तत्पश्चाच्चन्द्रगुप्तस्य राजा पश्यकारिणं प्रति यथार्हदण्ड-प्रतिपादनमपि कवे राजनीतिविषये सूक्ष्मेक्षिकत्वमेव प्रथयति। तदेव चाणक्यः कथयति—

'श्रेष्ठिन्! एवमयं राजा पश्यकारिषु तीक्ष्णदण्डो राजा न मर्षयिष्यति राक्षस-कलत्रप्रसादनं भवतः। तद्रक्ष परकलत्रेणात्मनः कलत्रं जीवितञ्च'[४]।।इति।

'षड्‌गुणं संयोगदृढा उपायपरिपाटी घटितपाशमुखी।
चाणक्यनीतिरज्जू रिपुसंयमनोद्यता जयति'[५]।।

१. मुद्रा., पृ. ७७; २. तत्रैव, पृ. ७८।
३. तत्रैव, पृ. ७८; ४. तत्रैव, पृ. ८८।
५. तत्रैव, पृ. ६.४।

इत्यादिश्लोकेन राजनीतौ षाड्गुण्यस्य तथा सामदानदण्डभेदात्मकस्योपायस्य परमोपादेयत्वमपि कवेः सम्मतमस्ति। स्वीयशासने सर्वगुणोपेतस्यामात्यस्य स्थितिः कर्तव्येति चाणक्यप्रयासेन राक्षसस्य चन्द्रगुप्तमन्त्रिपदे नियोजनमेव ख्यापयति। चाणक्यो राक्षसं द्विषन्नपि आत्मना तं प्रशंसन्नासीत्। सर्वथा तस्य राक्षससङ्ग्रहायैव मतिरासीत् राक्षसगुणप्रशंसायामयं श्लोकोऽवलोकनीयो वर्तते—

'ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।
भर्तुर्ये प्रलयेऽपि पूर्वसुकृतां सङ्गेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः'[१] ।।इति।

इत्थं विशाखदत्तस्य मुद्राराक्षसे विशाला दृष्टिरासीत् राजनीतिविषयिणी।



१. मुद्रा., १.१४।

# साहित्यशास्त्रे ध्वनिसिद्धान्तः

**डॉ. वृजेशमणिपाण्डेयः**
अनुसन्धाता,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

***

स्वीयया ऋजुतया मृदुतया मधुरतया च प्रसिद्धस्य साहित्यशास्त्रस्य संस्कृतवाङ्मये विशिष्टवैशिष्ट्ययुक्तं गरिममयं महत्त्वं सर्वथा विश्वविश्रुतं प्रथितञ्च वरीवर्ति, तत्रापि ध्वनिसिद्धान्तस्तु साहित्यशास्त्रे आत्मस्थानमालभते।

ध्वनेर्विवृतिक्रमे निष्पत्तिव्युत्पत्तिज्ञानमावश्कम्। प्रथमं तावन्निष्पत्तिप्रकारो विविच्यते—ध्वनिशब्दो भौवादिक-ध्वन-शब्दे धातोर्भावे कर्मणि कर्तरि वा इप्रत्यये कृते निष्पन्नः।

व्युत्पत्तयश्च क्रमश एवं वर्तन्ते, भावे प्रत्यये 'ध्वननं ध्वनि'रित्यनया व्युत्पत्त्या व्यञ्जनाव्यापारो ध्वनिशब्दार्थः, कर्मणि प्रत्यये ध्वन्यते यत् तद् ध्वनिरित्यनया व्यङ्ग्यरूपोऽर्थो ध्वनिपदार्थः, कर्तरि प्रत्यये ध्वनतीति ध्वनिरित्यनया च व्युत्पत्त्या वाच्योऽर्थः, वाचकः शब्दश्च ध्वनिशब्दार्थः। प्रकारेणानेन चतुष्प्रकारा ध्वनिविषयाः, ध्वनिशब्दस्य पञ्चमो विषयः समुदायरूपकाव्यमस्ति, यतो ह्युक्ताः चतुष्प्रकाराः समुदायरूपकाव्ये भवन्ति, अत एव काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः। अत्र समुदायरूपकाव्ये ध्वनिशब्दस्य व्यवहारः, प्रथमकारिकायां 'काव्यस्यात्मा ध्वनिः' इत्याचार्येण प्रतिपादितः।

अन्यार्थेषु व्युत्पत्तितो व्यवहारतश्च ध्वनिशब्दस्य प्रयोगे सत्यपि मुख्यतो व्यङ्ग्यार्थ एव ध्वनिशब्देनाभिधीयते।

प्रायेण समेषु साहित्यग्रन्थेषु ध्वनिपदार्थविवेचनं वर्तते, तथापि प्रामुख्येन विस्तृतेन रूपेण च प्रतिपादनं ध्वन्यालोक एव समुपलभ्यते। आनन्दवर्धनाचार्येण ध्वनिनिरूपणारम्भः प्रथमोद्द्योतस्य मन्दाक्रान्ताछन्दोबद्धया प्रथमकारिकया कृतः—

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्[१]।।

श्लोकस्यास्य विवृतिरेवंविधा विधीयते। ध्वनिकारा आनन्दवर्धनाचार्या ध्वनिसिद्धांन्तारम्भकर्तृत्वेन स्वं न ज्ञापयन्ति, अपि तु तदनुसारेण, यो ध्वनिर्बुधजनैः काव्यस्यात्मेति रूपेण समाम्नातः, अर्थात् सम्यग् आ समन्ताद् म्नातः प्रकटितः, तस्य ध्वनेः स्वरूपं सहृदयजनमनःप्रीतये आचार्या निरूपयन्ति।

अनेनेदं ज्ञायते यद् ध्वनिसिद्धान्तो ध्वनिकारात् पूर्वमप्यासीत्, ग्रन्थरूपेण तदारम्भो ध्वनिकारेणैव सम्पादितः। यदि च पूर्वं स्थितिरासीत् तर्हि विरोधोऽप्य-वश्यमेवासीत्, अत एव ध्वनिकारेण प्रथमकारिकायां ध्वनिविरोधे त्रयाणां वैमत्यानामुपस्थापनं कृतम्। प्रथमोऽभाववादः, द्वितीयो भाक्तवादः, तृतीयश्च अनिर्वचनीयतावादः। सम्भावनाऽऽधारितोऽभाववादः पक्षत्रये विभक्तः। तत्र प्रथमः पक्षः—

**अभाववादिनां प्रथमः पक्षः**

शब्दार्थशरीरं तावत् काव्यम्, वृत्तिग्रन्थे तावद्ग्रहणेन ज्ञायते यदेतत्सर्वसिद्धान्तसम्मतम्, न कस्याप्यत्र विप्रतिपत्तिः। ध्वनेः प्रतिपादनं सर्वथा काव्यात्मरूपेणाभीष्टमस्ति, अतः काव्यशरीरभूतौ शब्दार्थौ केनापि प्रकारेण ध्वनिपदवाच्यौ भवितुं न शक्नुतः। यदि चोच्यते शब्दार्थयोश्चारुत्वहेतवः गुणालङ्कारा ध्वनिरिति, तदपि न, यतो हि शब्दस्य चारुत्वहेतवोऽनुप्रासादयः, अर्थगताश्चोपमादयः, ते चालङ्कारा न ध्वनिपदवाच्याः, यतो हि शब्दार्थयोश्चारुत्वं द्विविधम्—स्वरूपमात्रनिष्ठं सङ्घटनाश्रितञ्च। तत्र शब्दानां स्वरूपमात्रकृतं चारुत्वं शब्दालङ्कारेभ्यः, अर्थानाञ्च स्वरूपमात्रकृतं चारुत्वमर्थालङ्कारेभ्यः, तथा च शब्दानां सङ्घटनाश्रितञ्चारुत्वं शब्दगुणेभ्यः। अर्थानाञ्च सङ्घटनापर्यवसितञ्चारुत्वमर्थगुणेभ्यः। सङ्घटना च वर्णविन्यासरूपा। अतो गुणालङ्कारव्यतिरिक्तो न कश्चिद् ध्वनिः। यद् गुणालङ्कारव्यतिरिक्तं भवति, तच्चारुत्वकारि न भवति, यथा असाधुदुःश्रवादयो नित्यानित्यदोषाः।

१. ध्वन्यालोकप्रथमोद्द्योते कारिकासंख्या १।

अभाववादी स्वमतपुष्ट्यर्थं केवलव्यतिरेक्यनुमानस्य प्रयोगं करोति। न्यायशास्त्रेऽनुमानप्रसङ्गे त्रिविधहेतवः प्रदर्शिताः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी च। अन्वयेन युक्ता व्याप्तिः अन्वयव्याप्तिः, व्यतिरेकेण युक्ता व्याप्तिर्व्यतिरेकव्याप्तिः, यत्रोभयव्याप्तिप्रयोगस्तत्रान्वयव्यतिरेकव्याप्तिः, यथोदाहरणम्—यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः, यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद इति व्यतिरेकव्याप्तिः, यत्र व्यतिरेकमात्रेण व्याप्तिग्रहः सम्पद्यते, तत्र केवलव्यतिरेकी हेतुर्भवति यथा—पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्, यदितरेभ्यो न भिद्यते न तद् गन्धवत्, यथा जलम्। अर्थाद् यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावः, यथा जलादिकम्, उक्तलक्षणसङ्घटनं च यथा—पृथिवीतरभेदः पृथिव्याम्, पृथिवीतरभेदाभावो यत्र तत्र गन्धाभावः, यथा जलादिकम्, जलादौ पृथिवीतरभेदाभावः, अतो गन्धाभावः, प्रकारेणानेन व्यतिरेकदृष्टान्तो जलमिति सम्पद्यते। यद् गन्धवत् तदितरभिन्नमेवंरूपा अन्वयव्याप्तिरत्र न सम्भवति। प्रकृते चानुमानप्रयोग एवं भविष्यति—ध्वनिर्गुणालङ्कारव्यतिरिक्तत्वाभाववान्, चारुत्वहेतुत्वात्। यो हि गुणालङ्कार-व्यतिरिक्तो भवति स चारुत्वहेतुर्न भवति, यथा—असाधुदुःश्रवत्वादिको दोषः। यदि च ध्वनिर्गुणालङ्कारव्यतिरिक्तस्तर्हि चारुत्वहेतुर्न, अथ च चारुत्वहेतुर्ध्वनिः, स न गुणालङ्कारव्यतिरिक्त इति व्यतिरेकी हेतुः।

अत्रोच्यते—वृत्तयो रीतयश्च यथा गुणालङ्कारव्यतिरिक्ताश्चारुत्वहेतवश्च, तथा ध्वनिर.पं गुणालङ्कारव्यतिरिक्तश्च चारुत्वहेतुश्च भविष्यतीत्यसिद्धो केवलव्यतिरेक्यनुमानप्रयोगः। अनेनाभिप्रायेणाह—तदनतिरिक्तवृत्तय इति। वृत्तिरीतीनां गुणालङ्कारव्यतिरिक्तत्वं नास्ति। यतो ह्यनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसम्पादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः। आसु वृत्तिसु वर्तन्तेऽनुप्रासभेदाः। परुषानुप्रासा नागरिका, मसृणानुप्रासा (ललितानुप्रासा) उपनागरिका, मध्यमानुप्रासा (कोमलानुप्रासा) ग्राम्या। एता वृत्तयस्तत्तद्-वृत्त्यनुकूलवर्णप्रयोगेण निर्धार्यन्ते। तस्माद् वृत्तयोऽनुप्रासादिभ्योऽनतिरिक्ता न। अर्थाद् वृत्तयो गुणालङ्कारव्यतिरिक्ता न सन्ति, अपि तु अलङ्कारेष्वेव तासामन्तर्भावः। रीतयोऽपि गुणालङ्कारव्यतिरिक्ता न, दीप्तललितमध्यम-वर्णनीयविषयं गौणीयवैदर्भपाञ्चालदेशस्वभावप्राचुर्यदृष्ट्या तदेव त्रिविधं रीतिरित्युक्तम्। ताश्च गुणान्तर्भूता एव जातिर्जातिमतो नान्या, समुदायश्च समुदायिनो नान्यः, अतो वृत्तिरीतयो गुणालङ्कारव्यतिरिक्ताः न। अतस्तत्र केवलव्यतिरेकी हेतुस्तदवस्थ एव।

**अभावादिनां द्वितीयः पक्षः (विकल्पः)**

द्वितीयाभाववादप्रकारं निरूपयन्नाह, नास्त्येव ध्वनिः प्रसिद्धप्रस्थान-व्यतिरेकिणः काव्यप्रकारस्य काव्यत्वहानेः, प्रसिद्धप्रस्थानञ्च = गुणालङ्कार-वृत्तिरीतयः, तेषु ध्वनेरनन्तर्भावाद् नास्त्येव ध्वनिः। उक्तप्रस्थानातिरिक्तकाव्य-प्रकारोऽसम्भव एव, यदि च तत्कालिकान् कांश्चित् सहृदयान् परिकल्प्यैवं निगद्यते, तर्हि तत् सकलविद्वन्मनोग्राहितां नावलम्बते।

**अभाववादिनां तृतीयः पक्षः**

कामनीयकमनतिवर्तमानस्य तस्य ध्वनेरुक्तेष्वेव चारुत्वहेतुषु, अर्थाद् गुणालङ्कारवृत्तिरीतिष्वन्तर्भावाद् ध्वनिर्नापूर्वः कश्चित्। कमनीयस्य कर्म कामनीयकम्, यदि च चारुत्वहेतूनामर्थाद् गुणालङ्कारवृत्तिरीतीनामन्यतमस्य ध्वनिरिति नामकरणं तर्हि तन्नामकरणं यत्किञ्चन कथनं स्यात्। एवं त्रिप्रकारकेणाभाववादेन प्रतिपाद्यते यद् नास्त्येव ध्वनिः।

तथा च यद्यपि कैश्चिदपि काव्यलक्षणविधायिभिर्ध्वनिरिति प्रकारलेशोऽपि न प्रदर्शितः, तथापि ध्वनिवादिभिर्यदेतदलीकसहृदयत्वभावनामुकुलितलोचनैर्नृत्यते, तत्र किं कारणमिति न जानीमः। विद्वद्भिः सहस्रशोऽलङ्कारप्रकाराः प्रदर्शिताः, परन्तु तेष्वलङ्कारेषु ध्वनिरिति प्रकारो न श्रूयते, तस्मात् प्रवादमात्रं ध्वनिः।

**भाक्तवादोपस्थापनम्**

भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यत इति भक्तिः = धर्मोऽभिधेयेन तटादीनां सामीप्यादिधर्म उत्प्रेक्षितो भवति, तत आगतो भाक्तो लाक्षणिकोऽर्थः। यदाहुः—

अभिधेयेन सामीप्यात्सारूप्यात्समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता[१]।। इति।

गुणसमुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः, तत आगतो गौणोऽर्थो भाक्तः। अनेन ज्ञायते भाक्तशब्दो गौणलाक्षणिकपर्यायवाची, मुख्यस्य चार्थस्य भङ्गो भक्तिरित्येवं मुख्यार्थबाधा, निमित्तं, प्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति। उक्तव्याख्यानेन ज्ञायते यद् ध्वनिर्भाक्तो लक्षणान्तर्भूत इति यावत्। एवं-विधासु विमतिषूपस्थितासु सहृदयमनःप्रीतये ध्वनेः स्वरूपं प्रतिपादयामः।

---

१. ध्वन्यालोकलोचनम्, प्रथमोद्द्योतः।

**अनिर्वचनीयतावादः**

अनिर्वचनीयतावादः प्रकारान्तरेण ध्वनेः स्वीकृतिरेव।

**ध्वनिस्वरूपम्**

तस्य ध्वनेः स्वरूपं सकलसत्कवीनां यानि काव्यानि तेषु काव्येषूपनिषद्भूतमतिरमणीयमणीयसीभिरपि प्राचीनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्। तथा च रामायणमहाभारतप्रभृतीनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि प्रतिष्ठां लभतामित्युद्देश्येन ध्वनेः स्वरूपं प्रकाश्यते।

योऽर्थः सहृदयश्लाध्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ[१]।।

काव्यात्मरूपेण व्यवस्थितः सहृदयश्लाघ्यो योऽर्थः, तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ।

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति ·लावण्यमिवाङ्गनासु।।

यथा अङ्गनासु (नवयौवनासु) लावण्यं पृथग्रूपेण दृष्टिगोचरीभवन् निखिलावयवव्यतिरिक्तं किमप्यन्यदेव, सहृदयानां लोचनामृतं तत्त्वान्तरं तद्वदेव काव्येषु प्रतीयमानार्थः काव्यस्य ये निखिलावयवाः शब्दार्थगुणालङ्कारवृत्तिरीतयस्तेभ्यो व्यतिरिक्तः पृथग्भूत्वैव दृष्टिगोचरो भवति। लावण्यञ्च—

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते।।

लोचनकारस्तु लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं धर्मान्तरमेव स्वीकरोति। तत्र प्रतीयमानस्य तावद् द्वौ भेदौ—लौकिकः, काव्यव्यापारैकगोचरश्चेति। लौकिकोऽपि द्विविधः—वस्तुध्वनिः, अलङ्कारध्वनिश्च। यः पूर्वं कुत्रापि वाक्यार्थेऽलङ्कारभावमुपमादिरूपतयान्वभूत्, इदानीं त्वनलङ्कार एवान्यत्र गुणीभावाभावात्, स ब्राह्मणश्रमणन्यायेन . पूर्वप्रत्यभिज्ञानबलादलङ्कारध्वनिरिति व्यपदिश्यते। तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते।

---

१. ध्वन्यालोके, १.२।

यस्तु स्वप्नेऽपि न स्वशब्दवाच्यः, न लौकिकव्यवहारपतितः, किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमार-स्वसंविदानन्दचर्वणाव्यापाररसनीयरूपो रसः सः काव्यव्यापारैकगोचरो रसध्वनिरिति, स च ध्वनिरेवेति स एव मुख्यतयात्मेति।

सः प्रतीयमानार्थो वाच्यसामर्थ्येन वस्त्वलङ्काररसादिभेदेनानेकविधः। सर्वेषु च तेषु प्रकारेषु तस्य प्रतीयमानस्य वाच्यादन्यत्वम्, सः प्रतीयमानार्थः कदाचिद् वाच्ये विधिरूपे प्रतिषेधरूपो भवति, यथा—

भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन[1]।।

प्रस्तुतोदाहरणे भ्रम इति विधिरूपार्थानन्तरं मा भ्रम इति निषेधरूपार्थप्रतीतिर्भवति। परस्परविरुद्धस्य विधिनिषेधरूपार्थस्य युगवद् वाच्यता भवितुं नार्हति, यतो हि 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायेन शब्दस्य सङ्केतितार्थाभिधाने यद् व्यापारस्तदभिधेति निगद्यते। निषेध-रूपार्थश्च सङ्केतितो नास्ति, अतस्तद्बोधार्थं कस्या अप्यन्यशक्तेः कल्पनमावश्यकम्। सा च शक्तिर्व्यञ्जनारूपा, तया शक्त्या प्रतीतो निषेधरूपोऽर्थो व्यङ्ग्यो भविष्यति।

लक्षणयाऽपि निषेधरूपार्थस्य प्रतीतिर्भवितुं नार्हति, लक्षणायाः प्रवृत्ति-र्मुख्यार्थबाधायामेव भवति, बाधा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः।

अतो नाभिधया न वा लक्षणया तात्पर्यशक्त्या वा निषेधरूपार्थस्य प्रतीतिर्भविष्यति, तदर्थं तु व्यञ्जनाव्यापारोऽवश्यमेवाङ्गीकरणीय इति।

क्वचिद् वाच्ये प्रतिषेधरूपे व्यङ्ग्यो विधिरूपः, यथा—

श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय।
मा पथिक रात्र्यन्धक शय्यायामावयोः शयिष्ठाः[2]।।

निषेधाभावोऽत्र विधिः, न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वभावः सौभाग्याभिमानखण्डनाप्रसङ्गाद् वाच्यो निषेधरूपो व्यङ्ग्यश्च विधिरूपो भावतदभावयोश्च साक्षाद्विरोधाद् वाच्याद् व्यङ्ग्यस्य भिन्नत्वं स्फुटमेव।

१. ध्वन्यालोकलोचनम्, प्र.उ.; २. तदेव, प्र.उ.।

क्वचिद् वाच्ये विधिरूपेऽनुभयरूपो यथा—

व्रज ममैवैकस्या भवन्तु निःश्वाससेवितव्यानि।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत[१]।।

अत्र व्रजेति विधिः। न चासौ व्रज्याभावरूपो निषेधः, नापि विध्यन्तरमेवान्यनिषेधाभावः। अत्र नायकः शठः, खण्डिता च नायिका।

एवमेव क्वचिद् वाच्ये प्रतिषेधरूपेऽनुभयरूपस्य क्वचिद् वाच्याद् विभिन्नविषयत्वेन व्यवस्थापितस्य व्यङ्ग्यार्थस्य प्रतीतिर्भवति।

रसादिरूपस्तृतीयः प्रभेदस्तु वाच्यसामर्थ्येनाक्षिप्तः प्रकाशते, न तु साक्षाच्छब्दव्यापारस्य (अभिधाव्यापारस्य) विषयः, अपि तु वाच्याद् भिन्न एव। प्रकृते तु शब्दो व्यतिरेके, यस्यायमभिप्रायः—वस्त्वलङ्कारौ शब्दमाध्यमेनाभिहितौ भवतः, परन्तु रसादयः कदाचिद् शब्दद्वारा (अभिधया) अभिहिता न भवन्ति, केवलं प्राणरूपेण विद्यमाना या तेषां (रसादीनाम्) आस्वाद्यमानताऽस्ति, तयैव ते रसादयः प्रकाशिता भवन्ति। तत्र ध्वननव्यापारादृते नास्ति कल्पनान्तरम्। स्खलद्गतित्वाभावे मुख्यार्थबाधादित्रयहेतुत्वाभावाल्लक्षणाऽपि नाशङ्कनीया; किन्तु सर्वत्र तेषां रसादीनां स्वशब्दनिवेदितत्वं न, यत्र कुत्रापि रसादिध्वनिरस्ति, तत्र सर्वत्र विशेषप्रकारेण विभावादिप्रतिपादनमुखेनैव रसादीनां प्रतीतिः। सा प्रतीतिः केवलं स्वशब्देनानूद्यते, न तु तच्छब्दकृता भवति, यतो हि विषयान्तरे तेन प्रकारेण तस्याः प्रतीतेर्दर्शनाभावात्। सर्वत्र तेषां रसादीनां स्वशब्दनिवेदितत्वं न इत्याशयं प्रकटयन्नाह लोचनकारः, यथा भट्टेन्दुराजस्य—

यद् विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद् गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत्।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः[२]।।

अत्र विभावानुभावबोधानन्तरमेव तन्मयीभवनस्य युक्त्या तद् विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थो रसात्मा स्फुरत्येवाभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादयः शब्दाभावेऽपि स्फुरिता भवन्ति।

---

१. ध्वन्या, प्र.उ.; २. ध्व., लो., प्र.उ.।

यत्र यत्र रसादीनां प्रतीतिस्तत्र तत्र स्वशब्दनिवेदितत्वमित्यन्वयव्याप्तिः। यत्र यत्र स्वशब्दनिवेदितत्वाभावस्तत्र तत्र रसादिप्रतीत्यभाव इति व्यतिरेकव्याप्तिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्येनाक्षिप्तत्वमेव रसादीनाम्। न तु केनापि प्रकारेण रसादीनां वाच्यत्वम्। अतः तृतीयोऽपि प्रभेदोऽर्थाद् रसादिध्वनिरपि वाच्याद् भिन्न एवेति स्थितम्।

काव्यात्मपर्यालोचनायां निगदितमानन्दवर्धनाचार्येण—

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः[१]।।

स एव तृतीयो रसध्वनिः काव्यात्मा। विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः। यथा चादिकवेर्वाल्मीकेर्निहतसहचरी-विरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।। इति।

सः प्रतीयमानार्थः—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्[२]।।

सोऽर्थस्तद्व्यक्तिसामर्थ्यभोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः[३]।।

व्यङ्ग्योऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च न शब्दमात्रम्। तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनां न वाच्यवाचकरचनामात्रेण। ज्ञातस्यापि विशेषतो निरूपणमनु-सन्धानात्मकमत्र प्रत्यभिज्ञानम्, न तु तदेवेदमित्येतावन्मात्रम्। व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद् वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेव। तथा हि—

आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः[४]।।

---

१. ध्व., प्र.उ., का. ५;
२. तत्रैव, प्र.उ., का. ७।
३. तत्रैव, १.८;
४. तत्रैव, १.९।

अर्थे इत्यस्य व्यङ्ग्यार्थे इत्यभिप्रायः। तथा च—

यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः[1] ।।

तस्य वस्तुन इत्यस्य व्यङ्ग्यरूपस्य सारस्येत्यर्थः। यथा हि पदार्थद्वारेण वाक्यार्थावगमस्तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः। एवं वाच्यातिरिक्तस्य व्यङ्ग्यस्यार्थस्य सद्भावे सिद्धे तस्योपयोगोऽपि प्रकृतेऽस्ति तथा हि—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः[2] ।।

उपयोजयन् = उपयोगं गमयन् प्रकृतश्लोके स्वशब्दो आत्मवाची। स्वश्च अर्थश्च तौ स्वार्थौ = शब्दार्थौ तौ गुणीकृतौ याभ्याम्, यथासंख्येन तेनार्थो गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः। तमर्थम् = वस्त्वलङ्कार‌रसादिषु च यत्सारभूतं तमर्थं व्यङ्क्तः = द्योतयतः। यद्यपि अविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथापि अर्थस्यापि सहकारिता न त्रुट्यति, यदि अर्थस्य सहकारिता न स्यात्, तर्हि अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात्, विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव, विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः। यत्रार्थः शब्दो वेति विकल्पाभिधानं प्राधान्याभिप्रायेणार्थात् केवलाः शब्दा अर्था वा व्यञ्जका न भवन्ति, अपि तु मिथः साहाय्येन व्यञ्जका भवन्ति, अनेन प्रकारेण भवार्थः प्राधान्येन व्यङ्ग्यव्यञ्जकस्तदा शब्दस्य सहकारिता, यदा च शब्दः प्राधान्येन रूपेण व्यङ्ग्यव्यञ्जकस्तदाऽर्थस्य सहकारिता। अनेनाभिप्रायेणाचार्येण 'वा' इत्यस्य प्रयोगः कृतः, शब्दार्थयोरनया सम्मिलितव्यञ्जकतया व्यङ्क्त इति द्विवचनप्रयोगोऽपि सार्थकः। भट्टनायकेन यद् द्विवचनं दूषितं तद् गजनिमीलिकयैवार्थाज्ञानवशादेव।

काव्यञ्च तद्विशेषश्चासौ काव्यविशेषः, अथवा काव्यस्य विशेषः काव्यविशेष इति कर्मधारयः षष्ठीतत्पुरुषो वा। आचार्येण पूर्वमेव निर्दिष्टो यद्ध्वनिरवश्यमेव काव्यात्मा; परन्तु तेनैव ध्वनिना काव्यव्यवहारो न भवति, अपि तु ध्वनिना सहैव शब्दार्थयोर्गुणालङ्कारोपस्कृतत्वमवश्यमेव भवेत्। यदि च ध्वनिमात्रे काव्यव्यवहारो स्यात्, तर्हि मीमांसकप्रणीतेषु शास्त्रेषु यत् प्रसिद्धं

१. ध्व., का. १०; २. तत्रैव, का. १३।

श्रुतार्थापत्तेः स्थलं तत्रापि काव्यव्यवहारः स्यात्, यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र श्रुतवाक्येन भोजनं विना पीनत्वानुपपत्त्या रात्रिभोजनमनुमीयते। अत्र ध्वनिरस्ति; परन्तु गुणालङ्कारोपस्कृतशब्दार्थयोरभावस्तेन काव्यव्यवहारो न भवति।

**प्रथमस्याभाववादस्य खण्डनम्**

यच्चोक्तम्—'चारुत्वप्रतीतिस्तर्हि काव्यात्मा स्यात्' इति तदङ्गीकुर्मः, नाम्नि खल्वयं विवादः। मूले यदुक्तं 'स काव्यविशेषो ध्वनि'रिति, तत्र स इति पदं विवृण्वन्नाह लोचनकारः—अर्थो वा शब्दो वा व्यापारो वा, ध्वनतीति व्युत्पत्त्या शब्दार्थयोर्ग्रहणं ध्वन्यते इत्यनया च व्युत्पत्त्या व्यापारस्य। यत्रार्थो वाच्यविशेषो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति। अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम्। उक्तव्याख्यानेनाभाववादिनां प्रथमो विकल्पः पराहतः।

**द्वितीयाभाववादखण्डनम्**

यदुक्तं कामनीयकमनतिवर्तमानस्यार्थाद् विशेषतः कमनीयत्वाभावात् तस्य ध्वनेरुक्तालङ्कारादिप्रकारेष्वन्तर्भाव इति तदसमीचीनम्। यतो हि वाच्यवाचकमात्राश्रयिणि प्रस्थानेऽर्थाद् अलङ्कारादौ व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः। वाच्यवाचकचारुत्वहेतवोऽलङ्कारादयस्तस्य ध्वनेरङ्गभूताः, स तु ध्वनिरङ्गीरूप एवेति प्रतिपादयिष्यमाणत्वात्। परिकरश्लोकश्चात्र—

व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः[१]।।

यत्र प्रतीयमानस्यार्थस्य वैशद्येनार्थात् चारुतया स्फुटतया चाप्रतीतिः, स नाम मा भूद् ध्वनेर्विषयः। यत्र तु प्रतीतिरस्ति, यथा—समासोक्त्याक्षेपानुक्तनिमित्त-विशेषोक्तिपर्यायोक्तापह्नुतिदीपकसङ्करालङ्कारादौ, तत्र ध्वनेरलङ्कारादिष्वन्तर्भावो भविष्यतीत्यादि निराकर्तुमभिहितम्। उपसर्जनीकृतस्वार्थौ—अर्थो गुणीकृतात्मा, गुणीकृताभिधेयः शब्दो वा यत्रार्थान्तरमभिव्यनक्ति, स ध्वनिरिति। तस्य ध्वनेः तेष्वलङ्कारादिषु कथमन्तर्भावः। व्यङ्ग्यप्राधान्ये हि ध्वनिः। न चैतद् व्यङ्ग्यप्राधान्यं समासोक्त्यादिष्वलङ्कारेष्वस्ति।

---

१. परिकरश्लोकः।

यत्रोक्तौ गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः।
सा समासोक्तिरुदिता सङ्क्षिप्तार्थतया बुधैः[१]॥

अर्थद्वयस्य यत्र सङ्क्षेपेण कथनं तत्र समासोक्तिरलङ्कारः, यथा—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्[२]॥

इत्यत्र समासोक्तेर्लक्षणस्वरूपं, हेतुर्नाम, तन्निर्वचनमिति पादचतुष्टयेन क्रमादुक्तम्, तच्चैवम्—समासोक्तेर्लक्षणस्वरूपम्—यस्मिन्नुक्तौ कथने वा प्रस्तुतेनार्थेन अतिरिक्तस्याप्रस्तुतार्थस्य सङ्क्षेपेण कथनं तत्र समासोक्तिः। तन्निरूपणमुपोढरागेण विलोलतारकमित्यत्र। उपोढो रागः सान्ध्योऽरुणिमा प्रेम च येन। अत्रोपोढरागशब्देन सान्ध्योऽरुणिमा इत्यस्य प्रेम इत्यस्य च कथनं विलोलास्तारकाः = ज्योतींषि नेत्र विभागाश्च यत्र इति सङ्क्षेपेण प्रस्तुतेनाप्रस्तुतार्थस्यापि कथनमतः समासोक्तिरलङ्कारः। तृतीयान्तपञ्चम्यन्तपदानामेव हेतुत्वं शास्त्रकारैरङ्गीकृतम्, तदनुसारेण तत्समानैर्विशेषणैरिति हेतुः। तच्च श्लोकस्य द्वितीयपादे प्रदर्शितम्, 'तथा गृहीतं शशिना निशामुखमि'त्यत्र निशाया मुखं = प्रारम्भो वदनं कोकनदं च तस्य विशेषणं तथा गृहीतमिति तदुभयस्मिन् पक्षे समानमेव। नामकथनं तृतीयपादे 'यथा समस्तं तिमिरांशुकं तया' इत्यत्र तिमिरं चांशुकाश्च सूक्ष्मांशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलम्, तिमिरांशुकं नीलजालिका नवोढाप्रौढवधूचिता, अत्र तयेत्यनेन नामकथनं समासोक्त्यलङ्कारनिर्वचनमर्थाद् व्युत्पत्तिश्चतुर्थपादेन पुरोऽपि रागाद् गलितं न लक्षितमित्यनेन पुरोऽपि समक्षं पूर्वदिशायां वा।

प्रकृते व्यङ्ग्यस्य प्रतीतावपि तस्य प्राधान्यं न भविष्यति, यतो हि नायकव्यवहारो निशाशशिनावेव संस्कुर्वाणः शृङ्गारविभावरूपोऽलङ्कारतां भजते। ततस्तु विभावीभूताद् वाच्याद्रसनिष्यन्दः पाणिनेः 'पुमान् स्त्रिया' इति नियमानुसारेण। एकशेषस्तु नाशङ्कनीयः, नायिकायाः नायके यो व्यवहारः, स निशायां समारोपितो नायिकायां नायकस्य यो व्यवहारः, स निशायां समारोपितः, नायिकायां नायकस्य यो व्यवहारः स शशिनि समारोपित इति व्याख्यानेन नैकशेषप्रसङ्गः। अलङ्कारेष्वपि यच्चारुत्वं तद् व्यङ्ग्यविशेषाक्षेपिणो वाच्यस्यैव। तथा हि तत्र शब्दोपारूढो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः, स एव व्यङ्ग्यविशेषमाक्षिपन् मुख्यं काव्यशरीरम्। यथा—

१. लो.प्र.उ.; २. ध्व.प्र.उ.।

अहं त्वां यदि नेक्षेयं क्षणमत्युत्सुका ततः।
इयदेवास्त्वतोऽन्येन विमुक्तेनाप्रियेण ते[१]।।

इति वक्ष्यमाणमरणविषयो निषेधात्माक्षेपः। एवमेव पूर्वोक्तान्यालङ्कारेष्वपि वाच्यस्यैव प्राधान्यं न तु व्यङ्ग्यस्य। चतुर्षु प्रकारेषु व्यङ्ग्यसत्त्वेऽपि ध्वनिव्यवहारो न भवति। प्रथमस्तावद् व्यङ्ग्यस्याप्राधान्ये, द्वितीयो व्यङ्ग्यस्य श्लिष्टप्रतीतौ, तृतीयो वाच्येण सह व्यङ्ग्यस्य समप्राधान्ये, चतुर्थश्च व्यङ्ग्यस्यास्फुटे प्राधान्ये। ध्वनिव्यवहारः कुत्रेति चेदुच्यते—

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः[२]।।

अर्थात् सङ्करेणालङ्कारानुप्रवेशसम्भावनया उज्झितो रहितः, यत्र शब्दार्थौ व्यङ्ग्यं प्रति तत्परावेव स्थितौ स एव ध्वनेर्विषयो मन्तव्यः। तस्माद् ध्वनेरन्यत्रार्थाद् अलङ्कारादिषु नान्तर्भावः। अनन्तर्भावस्यान्योऽपि हेतुः, तच्च—यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः, तस्य पुनरङ्गानि अलङ्कारगुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते।

न केवलमन्योन्यविरुद्धवाच्यवाचकभावव्यङ्ग्यव्यञ्जकभावसमाश्रयत्वान्न तादात्म्यमलङ्काराणाम्, ध्वनेश्च यावत्स्वामिभृत्यवदङ्गिरूपाङ्गरूपयोर्विरोधादित्यर्थः। न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः। पृथग्भावाभावेऽपि तेषामलङ्कारादीनां तस्य ध्वनेरङ्गरूपत्वमेव न त्वङ्गिरूपम्। यत्रापि वा अलङ्कारादीनामङ्गित्वम्, तत्रापि ध्वनेर्महाविषयत्वाद् अलङ्कारादिषु ध्वनेर्नान्तर्भावः। सूरिभिः कथित इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित् प्रतिपाद्यते प्रवृत्तेति। प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च वैयाकरणाः श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। यथाह भगवान् भर्तृहरिः—

यः संयोगवियोगाभ्यां करणैरुपजन्यते।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः[३]।।

करणैः = जिह्वादिस्थानैः, तथा च—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते[४]।।

---

१. लो., प्र.उ.; २. ध्व., प्र.उ.।
३. वाक्यपदीये, ब्रह्मकाण्डे, कारिका. सं.१०२।
४. वाक्यपदीये, ब्रह्मकाण्डे, कारिका–सं. ६६।

तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः। अस्या अभिप्रायं स्फुटतया प्रतिपादयन्नाह लोचनकारो वाच्यवाचकसहितः सम्मिश्र इति मध्यमपदलोपीसमासः। 'गामश्वं पुरुषं पशुम्' इतिवत्समुच्चयोऽत्र चकारेण विनाऽपि, तेन ध्वनतीति व्युत्पत्त्या वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दो ध्वनिः, ध्वन्यत इति ध्वनिरिति व्युत्पत्त्या ध्वन्यते सम्मिश्र्यते विभावानुभावसंवलनयेति व्यङ्ग्यार्थोऽपि ध्वनिः, ध्वननं ध्वनिरिति व्युत्पत्त्या शब्दनं शब्दः शब्दव्यापारः, न चासावभिधास्यः, अपि त्वात्मभूतः, अतः शब्दव्यापारोऽपि ध्वनिः, काव्यमिति व्यपदेश्यश्च योऽर्थः, सोऽपि ध्वनिः, उक्तप्रकारध्वनिचतुष्टयमयत्वात्। एवंविधस्य ध्वनेः प्रभेदो यथा—मुख्ये द्वे रूपे, लक्षणामूलध्वनिः (अविवक्षितवाच्यध्वनिः) अभिधामूलध्वनिः (विवक्षितान्यपरवाच्यध्वनिः) च। तद्भेदाश्च यथा—अविवक्षितवाच्यध्वनेर्द्वौ भेदौ—अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च। तथा च विवक्षितान्यपरवाच्यध्वनेर्मुख्यतो द्वौ भेदौ—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च। तत्राप्यवान्तरभेदाः। एवं महाविषयस्य ध्वनेर्यत्प्रकाशनं तदप्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन तुल्यं नास्ति। स्थितावस्यां तद्ध्वनिं प्रति भावितचेतसां युक्त एव संरम्भः। न च तेषु ध्वनिवादिषु कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम्। एवं ध्वनेस्तावदभाववादिनः पराहताः। अस्ति ध्वनिः। स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन।

मूलोक्ताभिप्रायं विवृण्वन्नाह लोचनकारः—स चेति। पञ्चधाऽपि ध्वनिशब्दार्थो येन, यत्र, यतः, यस्य, यस्मै इति बहुव्रीह्यर्थाश्रयेण यथोचितं सामानाधिकरण्यं सुयोज्यम्। उदाहरणार्थं यथा—अविवक्षितवाच्यो यस्येति बहुव्रीहिसमाश्रयेण ध्वनिः शब्दः (वाचकः) इत्यस्य सङ्गतिर्जायते। अन्यार्थेष्वपि एवमूह्यम्।

बहुव्रीहावन्यपदार्थप्राधान्यं भवति। स्थितावस्यां ध्वनेर्यो ह्यर्थो व्यङ्ग्यं, व्यञ्जनं, काव्यञ्च एष्वर्थेषु बहुव्रीहिसौलभ्यं जायते; किन्तु वाच्यरूपार्थे बोध्ये बहुव्रीहिसमासः सुलभो न भवति, यतो ह्ययमन्यपदार्थो नास्ति, अपि तु समासकुक्षावेव स्थितः। तत्समाधाने लोचनकारेण वाच्यस्यार्थः स्वात्मा कृतः, समासश्चैवं विहितः—अविवक्षितः स्वात्मा येन वाच्येन) इति। मूले यदुक्तं सामान्येनेति तदभिप्रायं प्रकटयन्नाह—वस्त्वलङ्काररसात्मना हि त्रिभेदोऽपि ध्वनिरुभाभ्यामेवाभ्याम् (अविवक्षितवाच्यध्वनिः, विवक्षितान्यपरवाच्यध्वनिश्च) सङ्गृहीतः। ध्वनिनामानन्तरमेतद्द्वयनामनिवेशनस्य किं फलमिति जिज्ञासायामुच्यते—अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्चेति। एतद्द्विनामनिवेशनस्याभिप्रायोऽस्ति यत्—केवलेन

व्यञ्जनाव्यापारेण ध्वनेः पूर्णत्वं न सिध्यति, अपि तु सहकारिरूपेण प्रतिपत्तॄन् अभिधायास्तात्पर्यस्य लक्षणायाश्चार्थानां प्रयोक्तुर्विवक्षायाश्चावश्यकता भवति, अत एवाचार्येण एतद्द्वौ नामनिवेशने कृते। अविवक्षितवाच्यध्वनिर्लक्षणामूलो भवति, अतस्तत्र लक्षणायाः सहकारिता, विवक्षितान्यपरवाच्ये च प्रयोक्तुर्विवक्षायाः सहकारिता भवति। यतो ह्येतदभावे केवलेन व्यञ्जनाव्यापारेण प्रतिपत्ता प्रतिपिपादिषितस्यार्थस्य ज्ञानं कर्तुं न शक्नोति, अनेनोद्देश्येन लोचनकारेणोक्तं वस्तुतस्त्वत्र एतन्नामद्वयनिवेशनेन ध्वनेः स्वरूपं प्रोज्जीवितं जातम्।

**आद्यस्य (अविवक्षितवाच्यध्वनेः) उदाहरणम्—**

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्[1]।।

लोचनकारेण 'सुवर्णपुष्पा' इत्यस्यार्थः 'सुवर्णानि पुष्प्यति' इति कृतः। एतत्केवलमाचार्येण अर्थप्रदर्शनं कृतमन्यथा कर्मण्यणि कृते 'टिड्ढाणञ्' इत्यनेन ङीप्-प्रसङ्गः स्यात्, अतः सुवर्णमेव पुष्पं यस्या इति विग्रहः समुचितः।

अभिधया पदार्थज्ञानानन्तरं तात्पर्यशक्त्याऽन्वयबोधः सञ्जायते, तथाप्यत्र मुख्यार्थबाधं स्पष्टीकर्तुं लोचनकाररीतिरेव ज्यायसी। पृथ्वी नास्ति काऽप्येतादृशी लता या सुवर्णपुष्पाणि विकासयति। प्रकारेणानेनात्र मुख्यार्थबाधो जायते, तत्पश्चात् सादृश्यमहिम्ना शूरः कृतविद्यः सेवकश्चेत्येतेषां त्रयाणां सुलभसमृद्धिसम्भारभाजनता लक्षिता भवति। अर्थाद् ये जनाः शूराः कृतविद्याः सेवकाश्च भवन्ति, ते महतीं समृद्धिं समाप्नुवन्ति, अयं लक्ष्यार्थस्तथा च लक्षणायाः प्रयोजनस्वरूपं त्रयाणां प्राशस्त्यप्रतीतिर्भवति।

**द्वितीयस्य (विवक्षितान्यपरवाच्यध्वनेः) उदाहरणम्—**

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः[2]।।

प्रस्तुतपद्ये 'तवाधरपाटलं दशति' इत्यंश एव विशेषतो विचारपथं गमयति, अतस्तव इत्यस्य व्यस्तप्रयोगो विशेषार्थव्यञ्जको लोचनकारेणाङ्गीकृतः। समस्तप्रयोगे तु नायिकासम्बन्धबोधो न जायते; अपि तु साधारणरूपेण तस्याः नायिकायाः अधरपाटलं शुकशावको दशति, अस्यार्थस्य प्रतीतिर्भवति। एवमत्राविमृष्टविधेयांशदोषस्याभावः 'तव' इत्यसमस्तेन पदेन नायिकासम्बन्ध-

१. ध्वन्यालोके, प्र.उ.; २. ध्वन्या., प्र.उ.।

प्रतीतेरवगमात् श्लोकार्थे वैशिष्ट्यप्रतीतिर्जायते, तेन चायमभिप्रायः समुदेति यत् तवाधरस्तव कारणेनात्यधिकं स्वादुचुञ्चुतां सम्प्राप्तः, तेनायं शुकशावको बिम्बफलमास्वादयन् भुङ्क्ते, न त्वौदरिकवत्परं भुङ्क्ते। अनेन शुकशावकस्य रसज्ञता व्यञ्जिता भवति। यैस्त्वसमस्तप्रयोगो द्रुतविलम्बितवृत्तानुरोधेनाङ्गीकृतः, तन्मतं नैव समीचीनम्। पद्येनानेन कस्यापि कामुकनायकस्य नायिकां प्रत्यभिलाषो व्यञ्जितो भवति। त्रयोऽत्र व्यापाराः—अभिधा, तात्पर्यम्, ध्वननञ्चेति। यतो हि मुख्यार्थबाधाद्यभावे मध्यमकक्षायां तृतीयाया लक्षणाया अभावात् प्रथमोदाहरणे लक्षणा प्रधानीभूय ध्वननव्यापारे सहकारिणी, प्रकृतोदाहरणे चाभिधा तात्पर्याख्या वा वृत्तिः सहकारिणी वर्तते। वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तेः केवलं लेशेन लक्षणाव्यापारोपयोगोऽस्तीत्युक्तम्, तेन द्वितीयेऽपि भेदे चत्वार एव व्यापाराः।

**भाक्तवादखण्डनम्**

यदप्युक्तं भक्तिर्ध्वनिरिति तत्प्रतिसमाधीयते—भक्तेर्ध्वनेश्चाभेदः प्रकारत्रयेण प्रतिपादयितुं शक्यते—पर्यायेण, लक्षणेन, उपलक्षणेन च। अर्थात् किं भाक्तवादिनो भक्तिध्वन्योः पर्यायतामामनन्ति यथा घटकलशयोः। उत वा भक्तिर्ध्वनेर्लक्षणं यथा पृथिवीत्वं पृथिव्या व्यावर्तकधर्मरूपलक्षणमस्ति। अथवोपलक्षणमर्थात् सूचकमात्रमस्ति, यथा—काकवद् देवदत्तस्य गृहम्। विकल्पेष्वेतेषु त्रिषु भक्तेर्ध्वनेश्च मिथः कः सम्बन्धः? इत्युद्भाव्याचार्येण निराक्रियते। प्रथमो विकल्पः पर्यायः, तत्सम्बन्धे आचार्या एवं सङ्गिरन्ते यद् भक्तिर्ध्वनिश्च कथमपि मिथः पर्यायताश्रयणं न विधास्यतः, उक्तञ्चाचार्येणानन्दवर्धनेन—

भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः[१]।

अयमुक्तप्रकारको ध्वनिर्भक्त्या नैकत्वं बिभर्ति भिन्नरूपत्वात्। अर्थाद् ध्वनेः स्वरूपं भिन्नमस्ति भक्तेश्च भिन्नम्, वाच्येन व्यतिरिक्तार्थस्य वाच्यवाचकाभ्यां तात्पर्येण रूपेण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः, उपचारमात्रन्तु भक्तिः। लोचनकारस्त्वाह—कारिकायां प्रयुक्तो ध्वनिशब्दः पञ्चस्वर्थेषु योज्यः—शब्दे, अर्थे, व्यापारे, व्यङ्ग्ये, समुदाये च। उपचारशब्दार्थो लोचनकारैरित्थं प्रकटितः—उपचरणमतिशयितो व्यवहारस्तेन चार्थेन व्यक्तीकृतो यद् यस्य शब्दस्य यस्मिन्नर्थे सङ्केतितो व्यवहारप्रसिद्धः, तमर्थं परित्यज्य तेन सम्बद्धेऽर्थे शब्दव्यवहार एवातिशयितव्यवहारः। यद्यप्यस्यामुपचाररूपगुणवृत्तौ लक्षणायां वा प्रयोजनमप्यस्ति;

१. ध्व., प्र.उ.।

किन्तु लक्षणायां प्रयोजनद्योतनध्वननरूपव्यापारोपयोगाभावाद् मात्रशब्दः प्रयुक्तः। यदर्थमधिकृत्य कश्चित् प्रवर्तते तत्प्रयोजनम्। तत्रार्थात् प्रयोजनेऽपि लक्षणाऽस्ति। एवं व्याख्यानेन ज्ञायते यदेकस्मिन्नन्योऽशतः प्रविष्टः, एकरूपत्वे त्वेतादृशी चर्चा एव न स्यात्। तस्माद् भक्तिरन्या ध्वनिश्चान्यः, न तु पर्यायः। द्वितीयश्च विकल्पो भक्तिर्ध्वनेर्लक्षणम्। तत्पक्षं दूषयन्नाह—लक्षणञ्च तदेव यदव्याप्त्यति-व्याप्त्यादिदोषशून्यम्; किन्तु भक्तेर्ध्वनिलक्षणत्वस्वीकारे अव्याप्तिरतिव्याप्तिश्च दोषौ समुद्भूतौ भविष्यतः। प्रोक्तञ्चाचार्येण—

अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया[१]।

अर्थाद् भक्तिर्ध्वनेर्लक्षणं न, अतिव्याप्त्यव्याप्तिदोषदुष्टत्वात्। ध्वनिव्यति-रिक्तेऽपि विषये भक्तेः सम्भवात्, लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वरूपातिव्याप्तिः। यत्र व्यङ्ग्यकृतमधिकसौष्ठवं नास्ति, तत्राप्युपचरितशब्दव्यापारेण (गौणीवृत्त्या) प्रसिद्ध्यनुरोधेन प्रवर्तितव्यवहाराः कवयो दृश्यन्ते, यथा—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति विशिनीपत्रशयनम्[१]।।

प्रकृतश्लोके 'वदति' इत्येव विचारणीयम्, तच्चैवम्—वदति = प्रकटयति, वदतीत्यस्य प्रयोजनमस्ति प्रकटनस्य ज्ञानम्। यदि प्रकटयतीति लेखः स्यात्, तथापि न किमप्यचारुत्वम्। वदतीत्यस्योपचरितव्यवहारेण गूढरूपेण वर्णनेन वा किमप्यधिकचारुत्वं न सिद्ध्यति। कथनमिदं कदापि ध्वनेर्विषयो भवितुं न शक्नोति; किन्तु भक्तेर्विषयः स्वीकर्तुं शक्यते। एवञ्चात्र ध्वनिर्नास्ति, भक्तिश्चास्त्यतोऽतिव्याप्त्या भक्तिर्ध्वनेर्लक्षणमिति वक्तुं न पार्यते।

एवं प्रकारेण पञ्चसंख्याकान्युदाहरणानि ध्वन्यालोके आचार्येण प्रदर्शितानि, तेषु सर्वेषूदाहरणेष्वतिव्याप्तेः सत्त्वाद् भक्तिर्ध्वनेर्लक्षणं नेति प्रतिपादितम्।

उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयी भवेत्[२]।।

यच्चारुत्वमुक्त्यन्तरेणार्थाद् ध्वन्यतिरिक्तेन स्फुटेन शब्दार्थव्यापारविशेषेण प्रकाशयितुं न शक्यते, तच्चारुत्वं प्रकाशयन् व्यञ्जकताञ्च बिभ्रत् (धारयन्) शब्दः

२. ध्वन्या. प्र.उ.; ३. तत्रैव, का. १५।

'ध्वनिः' इत्युक्तेर्विषयो भवति। अत्र चोदाहृतविषये शब्द उक्त्यन्तरा शक्यचारुत्वस्य व्यञ्जनाया हेतुर्नास्ति। प्रकृतप्रसङ्गोक्तः शब्द इति पञ्चस्वर्थेषु योज्यम्। किञ्च—

दृढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः[१]।।

तेषु लावण्यादिशब्देषु उपचरितशब्दवृत्तिरर्थाद् गौणी लाक्षणिकी चास्तीति। आदिग्रहणेनानुलोम्यं, प्रातिकूल्यं, सब्रह्मचारीत्येवमादयः शब्दा लाक्षणिका गृह्यन्ते। न चात्र किञ्चित् प्रयोजनमुद्दिश्य लक्षणा प्रवृत्तेति न तद्विषयो ध्वननव्यवहारः। तथाविधे च विषये क्वचित् सम्भवन्नपि ध्वनिव्यवहारो व्यञ्जकत्वेनैव प्रवर्तते, न तूपचरितलावण्यादिशब्दप्रयोगात्।

एवं यत्र यत्र भक्तिस्तत्र ध्वनिरिति तावन्नास्ति। तेन यदि ध्वनेर्भक्तिलक्षणं तदा भक्तिसन्निधौ ध्वनिव्यवहारः स्यादित्यतिव्याप्तिः। यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति साहचर्यनियमस्वीकारेऽपि। तथापि यद्विषयो लक्षणाव्यापारः, न तद्विषयो ध्वननव्यापारः, न च भिन्नविषययोर्धर्मधर्मिभावः, धर्म एव च लक्षणमित्युच्यते। तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः, ध्वननञ्च प्रयोजनविषयः, न च प्रयोजनविषयोऽपि लक्षणाव्यापारः समुचितः, लक्षणासामग्र्यभावादित्यभिप्रायेणोक्तमाचार्यैः—

मुख्यां वृत्तिं परित्यज्य गुणवृत्त्याऽर्थदर्शनम्।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः[२]।।

अस्याः पङ्क्तेरयमभिप्रायो यद् यत् फलं प्रयोजनं वा उद्दिश्य मुख्यां वृत्तिं (अभिधावृत्तिं) परित्यज्य गुणवृत्त्याऽर्थाल्लक्षणावृत्त्याऽर्थबोधः क्रियते, तत्रार्थात् प्रयोजनप्रतिपादने शब्दस्य (वाचकशब्दस्य) स्खलद्गतित्वाभावोऽर्थात् प्रयोजनप्रतिपादने स वाचकशब्दः समर्थ एव, न त्वसमर्थः, अभिधापुच्छभूतैव लक्षणेति प्रतिपादितम्। यतो हि यदा मुख्यार्थबाधेनाभिधाया अवरोधो भवति, तदाऽभिधा स्वयमेवाचरितार्थीभूयान्यार्थमवगमयति। एवं लक्षणा स्वोपस्थित्याऽमुख्यार्थं बोधयति। तत्राप्यमुख्यरूपेण सङ्केतग्रहणं भवति। स्थितावस्यामभिधां विना लक्षणावसर एव नास्ति, अतोऽभिधापुच्छभूतैव लक्षणा। उक्तञ्च—

१. ध्वन्या., १.१६; २. तत्रैव, प्र.उ., का.-१७।

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्[1]।।

गुणवृत्तिशब्दार्थः लक्षणेति। यतोऽभिधापुच्छभूतैव लक्षणा। तस्मादन्यो ध्वनिः, अन्या च गुणवृत्तिः। लक्षणा व्यञ्जनरूपध्वनेर्लक्षणमिति वक्तुं न शक्यते, यतो हि भक्तिर्ध्वनेर्लक्षणमिति सिद्धान्ताङ्गीकारे लक्ष्यातिरिक्तस्थले (ध्वन्यतिरिक्तस्थले) लक्षणस्य प्राप्तिरूपातिव्याप्तिः, तथा च लक्ष्यावृत्तित्वरूपा व्याप्तिरपि। यथा विवक्षितान्यपरवाच्यध्वनौ लक्षणाप्रसङ्गाभावाद् ध्वनेश्च सत्त्वाद् भक्तिरूपलक्षणमव्याप्तं भविष्यति। लोचने आचार्येण लक्षणायाः पञ्चरूपाणां निर्देशः कृतः, यथा—

अभिधेयेन सामीप्यात् संयोगात्समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता।।

क्रमश उदाहरणं यथा—भ्रमरः, गङ्गायां घोषः, यष्टीः प्रवेशय, वैपरीत्याद् यथा—शत्रुमुद्दिश्य कश्चिद् ब्रवीति—किमिवोपकृतं न तेन ममेति। क्रियायोगात् कार्यकारणभावादित्यर्थः, यथा अन्नापहारिणि व्यवहारः 'प्राणानयं हरति' इति। एवमनया पञ्चविधया लक्षणया विश्वमेव व्याप्तम्।

अनेन प्रकारेण शिखरिणि॰ इत्यस्मिन् श्लोके प्रश्नविशेषादिरूपं बाधकमाश्रित्य सादृश्याल्लक्षणा भविष्यति। एवं विवक्षितान्यपरवाच्यध्वनावपि लक्षणायाः सत्त्वान्नातिव्याप्तिः। अत्र लोचनकारेण सारांशतो निगद्यते यत्—यद्यपि मुख्यार्थबाधादिरूपलक्षणाहेतुसत्त्वाद् विवक्षितान्यपरवाच्यध्वनौ लक्षणा सम्भवाऽस्ति, तथापि सहृदयानां प्रकृतस्थले तादृश्यपेक्षा नास्ति। ते त्वत्र वक्तुः (अनुरागिणः) प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटुविरचनात्मकविभावोद्दीपनं व्यङ्ग्यमिति स्वीकुर्वन्ति। अतोऽत्र लक्षणाप्रसङ्गकल्पना अनावश्यक्येव।

वस्तुतो ध्वनेर्यस्मिन् स्थले लक्षणायाः काचन सम्बन्धसम्भावना नास्ति, तदस्ति असंलक्ष्यक्रमव्यङ्ग्यः, अर्थाद् रसादिध्वनिः। काव्येन यत्र विभावानुभावप्रतिपादनं क्रियते, तत्र लेशमात्रमपि बाधकानुप्रवेशः (लक्षणाहेतुप्रवेशः) नास्त्यस्यां स्थितौ भक्तिरूपलक्षणस्य स्वीये लक्ष्येऽर्थाद् ध्वनावभावाद् अव्याप्तिर्भविष्यति।

---

१. ध्वन्या., १.१८।

ततो मीमांसकैराशङ्क्यते यत् पूर्वोक्तस्वरूपलक्षणां वयं नाङ्गीकुर्मः, अपि त्वभिधेयस्याविनाप्रतीतिरेव लक्षणालक्षणमर्थादभिधेयेन सह येन केनापि सम्बन्धेन सम्बद्धस्य प्रतीतिरेव लक्षणा। एवमभिधेयरूपविभावानुभावयोरविनाभूता रसादयो लक्षणाविषया भविष्यन्ति, अतोऽसंलक्ष्यक्रमव्यङ्ग्ये लक्षणाप्राप्तिरस्त्येव, पूर्वोक्ता समस्या तदवस्थैव।

अस्या आशङ्कायाः समाधानं कुर्वता आचार्येण प्रथमतः 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति लक्षणस्य खण्डनं कृतम्। तच्च खण्डनमेवमस्ति— यदाऽभिधेयस्याविनाभूतप्रतीतिरेव लक्षणा भविष्यति, तदा धूमशब्दाद् धूमज्ञाने सति तेनाविनाभूतामग्निस्मृतिमपि भवन्तो लक्षणायाः कार्यं स्वीकरिष्यन्ति, तत्पश्चादग्निना शीतापनोदनस्मृतिरपि धूमशब्दार्थोऽङ्गीकरिष्यते, तेनानन्तशब्दार्थकल्पना कर्तव्या भविष्यति। अन्ततो भवताऽपि 'मुख्यार्थबाध एव लक्षणाबीज'मिति स्वीकर्तव्यं भविष्यति। तत्स्वीकारे तु असंलक्ष्यक्रमव्यङ्ग्येऽर्थाद् रसादिध्वनौ विभावादौ बाधकाभावाल्लक्षणायाः सम्बन्ध एव न, ध्वनेश्च सत्त्वादव्याप्तिः।

स्वसिद्धान्तखण्डनेनाक्रोशतां गतो मीमांसकः कथयति यद् रत्यादिचित्तवृत्तिज्ञाने शब्दव्यापार एव नास्तीति वयमङ्गीकुर्मः, अपि तु येन प्रकारेण धूमज्ञानेनाग्नेः स्मरणं कुर्मस्तथैव विभावादिप्रतीत्यनन्तरं रसादिचित्तवृत्तिप्रतीतिर्भवति। अत्रोच्यते लोचनकारेण—तदा तु परचित्तवृत्तिज्ञानमेव रसज्ञानमिति भवतामभिमतम्; किन्त्वेतत्तु परचित्तवृत्तेरनुमानमात्रमस्मिन् रसत्वं कथम्? अपि तु काव्यगतविभावादीनां चर्वणया रूपलौकिकचमत्काररूपरसास्वादोऽस्ति तं स्मरणानुमानादावाकृष्य तद्धीनताज्ञापनं नैवोचितम्।

रसानुभूतयेऽनुमानस्मृत्यादयो बद्धा न सन्ति। केवलं दर्शको दृश्यमानेन सह हृदयसंवादमनुभवन् चर्वणाबलेन पूर्णतया तन्मयतां प्राप्नोति, तदा तेन दर्शकेन ज्ञायते यत् सः कस्यापि भिन्नस्य तटस्थव्यक्तेर्वा सुखेन सुखी, दुःखेन दुःखी वा भवति। एतदेव रसभूमेरलौकिकताऽत्र। दुःखस्याप्यानन्दरूप एवानुभवो भवति। एवमालङ्कारिकैराचार्यै रसानुभूतये चर्वणाऽनिवार्येति स्वीकृतम्; अपि तु ते त्वेतदपि कथयन्ति यच्चर्वणायां रसानुभूतौ च भेद एव नास्ति। सम्प्रति यदि केनाप्युच्यते यच्चर्वणा केनापि प्रभावेणोत्पन्ना भवति, तदा त्विदं समाधानमस्ति यत् साऽलौकिक्यस्ति। अतस्तत्र लौकिकप्रत्यक्षादिप्रमाणानामुपयोग एव नास्ति। लोके यत् कार्यं कारणञ्च भवतस्ते एव काव्ये विभावानुभावनाम्ना ज्ञायेते। चर्वणा स्थायिभावं रस्यमानमापादयति, अस्यायमभिप्रायो नास्ति यच्चर्वणाप्रमाणव्यापारमिव

ज्ञापनस्वरूपमथवा हेतुव्यापारमिवोत्पादनरूपमस्ति, अपि तु तत्त्वभिव्यञ्जनमस्ति। चर्वणामाध्यमेन विभावादयः रसहेतवोऽवश्यमेव सन्ति किन्त्वलौकिकाः, अतस्ते विभावादयो न ज्ञापकहेतवः, न वा कारकहेतवः। यदा रसः स्वसंवेदनसिद्धोऽस्ति, तदा तस्य सिद्धये अतिरिक्तप्रमाणराहित्यकथनं न किञ्चिदपि विकृतिकारकम्।

अस्तु, यदा भवन्तो लक्षणया रसबोधप्रतिपादनं विधास्यन्ति, तर्हि तु यदा अर्थाभिधानुपयोगी अनुप्रासोऽपि रसव्यञ्जकस्तदा त्वभिधाप्रसङ्ग एव नास्ति। पुनश्च लक्षणया रसबोधप्रतिपादनं नाशङ्कनीयम्। अन्ते आचार्येण कस्याप्येषा शङ्का समुद्भाविता यत् काव्यं वाच्यार्थबोधकं व्यङ्ग्यार्थबोधकञ्च। प्रकारेणानेन वयं वाक्यभेदं विधास्यामः। तस्योत्तरे लोचनकारोक्तिरस्ति यद् वाक्यार्थः कदापि द्विधा भवितुं न शक्नोति, यतो ह्येकस्मिन् काले वाक्यार्थद्वयज्ञानं भवितुं न शक्नोति प्रकरणादेः साहाय्यं द्वितीये वाक्येऽप्याश्रयणीयं भविष्यति। यदि च भवन्तः प्रकरणादीन् नियामकत्वेन नाङ्गीकरिष्यन्ति, तदा तु 'अग्निहोत्रं जुहुयात् स्वर्गकामः' अस्य श्रुतिवाक्यस्यार्थः खादेच्छ्वमांसमिति स्यात्, तर्हि तदर्थनिरसने किं प्रमाणं भवतां पार्श्वे स्थास्यति। अन्ततः प्रकरणादिस्वीकारपूर्वकमेवार्थाभिधानं भवद्भिर्विधातव्यं भविष्यति। अतो वाक्यभेदकथनं दोषपूर्णमेव।

रसास्वादस्थितौ लौकिकस्थितिरिव पूर्वापरकालचिन्ता न जायते, सा तु सर्वथा अलौकिकी स्थितिः। यथा हि वृत्तिकारः सामान्यतो विवक्षितान्यपरवाच्यध्वनौ भक्तेरभावनिर्देशं कृतवान्। तत्र लोचनकारकथनमस्ति यत्—मन्ये विवक्षितान्यपरवाच्यध्वनेः संलक्ष्यक्रमरूपभेदे लक्षणा कथञ्चित् स्वीकार्याऽपि; किन्तु रसादिरूपालक्ष्यक्रमे लक्षणाङ्गीकारस्य नास्ति काचिदावश्यकता, न केवलं विवक्षितान्यपरवाच्य एव, अपि त्वविवक्षितवाच्यध्वनौ यत् खलु लक्षणामूलमस्ति, तत्रापि मुख्यार्थबाधादिलक्षणासामग्र्यनपेक्षयैव व्यङ्ग्यार्थे विश्रान्तिर्भवति।

एतेनेदं परिपुष्टं भवति यद् भक्तिर्ध्वनेर्लक्षणं नेति।



लघु-ग्रन्थमाला
[ ६३ ]

श्रीविश्वेश्वरपाण्डेयविरचिता

# रसचन्द्रिका

सम्पादकः
डॉ. हरिवंशकुमारपाण्डेयः
ईक्ष्यशोधकः, प्रकाशन-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वि.सं. २०५९

# सम्पादकीयम्

**साहित्यपाथोनिधिमन्थनोत्थं**
**काव्यामृतं रक्षत हे कवीन्द्राः।**
**यदस्य दैत्या इव लुण्ठनाय**
**काव्यार्थचौराः प्रगुणीभवन्ति।।**

अस्ति काव्यं कवेश्चिन्तनप्रासादं किं काव्यमिति जिज्ञासानिवृत्तये। यावत् काव्यं भुवि वर्तते तावत् कवेः सारस्वतं कर्म परिपूर्णम्। यथा चोक्तम्—

**काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि।**
**तावत् सारस्वतं स्थानं कविरासाद्य मोदते।।**

सम्पूर्णं ज्ञानं विज्ञानं भूगोलं खगोलमितिहासादिकं च काव्यविषयपरिधौ समापतति। किञ्चिदपि वस्तु लोके ईदृग्विधं नास्ति यत्र काव्यप्रसरोऽप्राप्तावसरः। सुष्ठूक्तं केनापि —

**न स शब्दो न सा विद्या न स न्यायो न सा कला।**
**जायते यत्र काव्याङ्गमहो भारो महान् कवेः।।**

सुखपूर्वकं सुकुमारमतीनामपि चतुर्वर्गफलप्राप्तिसाधकं काव्यमेव। नास्ति काव्यादन्यद्वस्तु पुरुषार्थचतुष्टयसाधकं सुखपूर्वकं स्वल्पबुद्धीनां राजश्रेष्ठिसुतानां कृते। यथाह तत्रभवान् साहित्यदर्पणकारो विश्वनाथः—

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते।।**

अन्यैरपि समर्थितम्—

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्।।**

कवेः कर्म काव्यमुच्यते। संसारस्यास्य रचनाकर्ता अपि कविः। यथा चोक्तम्—

**कविर्मनीषी परिभूः स्वयम्भूः।।**इति।

प्रख्यातकोशकारोऽमरसिंहः काव्यं कविं च पर्यायरूपेण गृहीतवान्। यथा—शुक्रो दैत्यगुरुः, काव्य उशना भार्गवः कविः।

ननु कोऽयं कविर्यस्य कर्म काव्यमुच्यत इति जिज्ञासायां वैजयन्तीकोषो वदति—प्राज्ञा काव्यकृतौ कविः। यास्काचार्येण कविः क्रान्तदर्शी मननशीलो दूरद्रष्टा च स्वीकृतः। अमरसिंहोऽपि कथयति—संख्यावान् पण्डितः कविः। व्याकरणरीत्या 'कु'शब्दे, 'कुङ्'शब्दे इति धातोर्वा इप्रत्यये कृते कविशब्दो निष्पद्यते। मुकुटादिकोशकारैश्च 'कवृ-'वर्णे इति धातुना निष्पादितः कविशब्दः। सामान्यतयाऽनेन शब्देन क्रान्तदर्शनं कृत्वा वस्तुवर्णनरतो विद्वान् व्यज्यते। कवेः कृते क्रान्तदर्शनं तद्वर्णनमुभयमस्त्यावश्यकम्। यथा स्वीकरोति भट्टतौतः—

**दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः।**
**तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।।**
**नोदिता कविना लोके यावज्जाता न वर्णना।।**

रूपकं भारतीयचिन्तनधाराया विशिष्टा सारग्राहिका शैली। काव्यस्वरूपबोधनायापि बह्व्यो रूपककल्पनाः कृता मनीषिवर्य्यैः। राजशेखरस्य काव्यपुरुषस्य कल्पना तु प्रशंसनीयाऽस्ति। अस्य काव्यपुरुषस्य शरीरं वर्णयन् वदति राजशेखरः सरस्वतीमुखेन काव्यमीमांसायाम्—'शब्दार्थौ चास्य शरीरम्। प्राकृतं बाहुः। पिशाचभाषा चरणौ। गुणा गुणस्थानीयाः। मिश्रभाषा वक्षःस्थलम्। सस्कृतं मुखम्। छन्दांसि रोमस्थानानि। अलङ्काराश्चालङ्करणभूताः। रस आत्मा। वचनविन्यासो रीतिः। प्रवृत्तिश्च वेषविन्यासः' इत्यादि।

भाषायां व्युत्पत्तिवर्धनाय यथा व्याकरणशास्त्रमपेक्ष्यते, तथैव काव्ये नैपुण्यायालङ्कारशास्त्रमपि। अलङ्कारशास्त्रं विना केवलं काव्ये नैपुण्यमेव न सम्पद्यते; अपि तु वाक्यदोषदृष्टिरपि नोत्पद्यते। नैतद्विना पूर्णरूपेणार्थावगतिः। वचसो व्यङ्ग्यार्थविलसितत्वं वा व्यञ्जकपदावलिपेशलत्वमलङ्कारशास्त्राधीनमेवास्ति। अत एव शास्त्रमिदं स्वजन्मसमयादेव नितरां लोकप्रियतामभजत्। तस्मादेतत् काव्यालङ्कार-काव्यशास्त्र-क्रियाकल्प-साहित्यविद्याऽलङ्कारशास्त्र-साहित्यशास्त्रादि-कतिपयनामभिः ससम्मानं सानुरागञ्च समाहूतमभूत्।

अलङ्कारशास्त्रस्येतिहासः कालक्रमेण चतुर्षु भागेषु विभजितुमर्हति—

१. **प्रारम्भिककालः**—वैदिककालादारम्भ भामहपूर्वकालः। कालेऽस्मिन् चतुर्णामलङ्काराणां निरूपणमाचार्यैः कृतम्।

२. **रचनाकाल:**—आचार्यभामहादारभ्याऽऽनन्दवर्धनाचार्यपूर्वकाल:। कालेऽस्मिन् अलङ्कारसम्प्रदायस्य विकासो जात:। तस्य प्रमुखा आचार्या:—भामह:, दण्डी, उद्भट:, रुद्रटश्चासन्।

३. **निर्णयात्मककाल:**—आनन्दवर्धनाचार्यादारभ्य मम्मटान्तकाल:। यद्यपि कालेऽस्मिन् आनन्दवर्धनाचार्येण काव्ये 'ध्वनिरेवात्मा' इति प्रतिपादितम्, तथापि अलङ्कारादयस्तस्य गुणोत्कर्षका: सन्तीति निर्णीतम्। तदनन्तरमाचार्यकुन्तकस्य 'वक्रोक्तिजीवितम्' उपलभ्यते। आचार्यमम्मट एतस्य कालस्य प्रमुख आलङ्कारिक:। 'काव्यप्रकाश:' तस्य प्रमुखा रचनाऽद्यापि विद्वत्समाज आद्रियते।

४. **व्याख्यात्मककाल:**—आचार्यमम्मटादारभ्य विश्वेश्वरपाण्डेयपर्यन्तमस्त्यस्य कालस्य सीमा। कालेऽस्मिन् विश्वनाथ-जयदेव-अप्पयदीक्षित-जगन्नाथ-विश्वेश्वर-पाण्डेयसमा आलङ्कारिका जाता:, यै: सर्वाङ्गपूर्णालङ्कारिका ग्रन्था रचिता:।

**आचार्यविश्वेश्वरपाण्डेय:**

पण्डितराजजगन्नाथस्यानन्तरं काव्यशास्त्रविषयकरचनाक्षेत्रे प्राय: संस्कृतविदुषां प्रतिभा कुण्ठिता जाता। तथाविधे समये व्याकरणशास्त्रस्य 'वैयाकरणसिद्धान्तसुधानिधि:', न्यायशास्त्रस्य 'तर्ककुतूहलम्', 'दीधितिप्रवेशादय:' इति ग्रन्थानां प्रणेता परमप्रतिभासम्पन्नो विद्वान् विश्वेश्वरपण्डित: पाण्डेयो वा नामाऽऽलङ्कारिक: 'अलङ्कारकौस्तुभ'-'रसचन्द्रिका'प्रभृत्युच्चकोटिकानलङ्कार-शास्त्रीयान् ग्रन्थान् प्रणीतवान्। नारिकेलरसमिवास्य पण्डितस्य ग्रन्थेषु विविधरूपा: गम्भीरपाण्डित्यञ्च लक्ष्यते।

विश्वेश्वरपाण्डेयस्य पितुर्नाम **लक्ष्मीधर** आसीत्। उत्तरप्रदेशस्य अल्मोडामण्डलान्तर्गते 'पाटिया'नामके ग्रामे ब्राह्मणकुले विद्वानयं जनिं लेभे। पण्डितस्यास्य समयोऽष्टादशशताब्द्या: प्रारम्भिक: कालो मन्तव्य:। अस्य पूर्वजा भारद्वाजगोत्रिया: कान्यकुब्जब्राह्मणा आसन्। अस्य पिता लक्ष्मीधरपाण्डेयो वृद्धावस्थायां काशीमेत्य गङ्गातटे मणिकर्णिकाघट्टे वासमकरोत्। भगवतो भूतभावनस्य विश्वनाथस्य शरण एव शेषं जीवनमयापयत्। तत्रैव तस्य विश्वेश्वरपाण्डेयस्य शिक्षा दीक्षापि जाता। मन्दारमञ्जर्यादिषु स्वरचनासु प्रारम्भेऽनेन स्वपितुरेव वन्दना कृता। अनेन ज्ञायते यदस्य विद्यागुरुरपि पितैवासीत्। तद्यथा—

**जयति यथाजातानां वाग्जात-सुजात-पारिजातश्री:।**
**श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुनिकर:।।**

रसचन्द्रिकायामपि तदेव मङ्गलाचरणं समुपलभ्यते। जनश्रुतिरियमस्ति यदयं विश्वेश्वरः पञ्चदशवर्षस्यावस्थायामेव काव्यरचनां प्रारब्धवान्; किन्तु चत्वारिंशद्वर्षस्यावस्थायामेवाकाले कालकवलितोऽभूदयं पदवाक्यप्रमाणविद् पण्डितः श्रीविश्वेश्वरः। अस्मिन्नल्पीयसि कालेऽपि पण्डितेनानेन विंशत्यधिकानां ग्रन्थानां प्रणयनं विहितम्।

**विश्वेश्वरपाण्डेयस्य कृतयः**

आचार्यविश्वेश्वरपाण्डेयस्य मन्दारमञ्जर्याष्टीकाकारः श्रीतारादत्तपाण्डेयस्तस्य विदितरचना निम्ननिर्दिष्टा अमन्यत—१. अलङ्कारकौस्तुभम्, २. अलङ्कारमुक्तावली, ३. आर्यासप्तशती, ४. कवीन्द्रकण्ठाभरणम्, ५. काव्यतिलकम्, ६. काव्यरत्नम्, ७. तर्ककुतूहलम्, ८. दीधितिप्रवेशः, ९. नवमालिका, १०. नैषधीयटीका, ११. मन्दारमञ्जरी, १२. रसचन्द्रिका, १३. रसमञ्जरी, १४. रोमावलीशतकम्, १५. लक्ष्मीविलासः, १६. वक्षोजशतकम्, १७. शृङ्गारमञ्जरीसट्टकम्, १८. षड्-ऋतुवर्णनम्, १९. व्याकरणसिद्धान्तसुधानिधिः, २०. होलिकाशतकञ्च। कतिपयतान्त्रिकग्रन्थानपि पण्डितोऽयं रचितवान्। तद्यथा—तारासहस्रनामव्याख्या। रुक्मिणीपरिणयनाटकमप्यस्यैव रचना।

'अलङ्कारकौस्तुभम्'-नामकोऽस्य काव्यशास्त्रस्यान्तिमः प्रामाणिकश्चातिगौरवपूर्णो ग्रन्थोऽस्ति, यस्मिन् स रसगुणदोषरीतिप्रभृतीनां मम्मट-जगन्नाथादिभिरप्यधिकं विशिष्टं विवेचनमकरोत्। स्थाने स्थानेऽसावप्पयदीक्षितस्य पण्डितराजस्य च मतखण्डनमकरोत्। स्थाने स्थाने स्वरचितपद्यानुदाहृत्य स्वकाव्यनिर्माणपाटवमपि पण्डितेनानेन प्रमाणितम्। ग्रन्थेऽस्मिन् अलङ्कारविवेचनमतिविशदं तर्कपूर्णञ्चास्ति। अस्योपर्यनेन स्वोपज्ञटीकापि रचिता, या रूपकालङ्कारपर्यन्तमेव प्राप्यते। सरलपरिपाट्यावबोधायानेन लिखितोऽपर आलङ्कारिको ग्रन्थः 'अलङ्कारप्रदीपः'। कवीन्द्रकण्ठाभरणे विदग्धमुखमण्डनग्रन्थमनुसृत्य शब्दालङ्काराणां विवेचनं सुन्दरं चित्रकाव्यनिरूपणमपि विहितम्। रसचन्द्रिकायां रसस्य साङ्गोपाङ्गनिरूपणं कृतमस्ति। मन्दारमञ्जर्यां बाणस्य कादम्बरीशैल्या तेनोत्कृष्टा रचना कृता। काव्यस्यास्य कादम्बरीव भागद्वयम्—पूर्वार्द्धमुत्तरार्द्धञ्च। पूर्वार्द्धस्य रचना विश्वेश्वरपाण्डेयेन, उत्तरार्द्धस्य तु तच्छिष्येण केनापि कृता। वैयाकरणसिद्धान्तसुधानिधिग्रन्थे पाणिनीयाष्टाध्यायिक्रमेण तत्सूत्राणां व्याख्या तेन विहिता। एतेन एष व्याकरणग्रन्थोऽतीवसरलोऽभूत्।

**रसचन्द्रिका**

रसचन्द्रिकेयं पाण्डेयकुलभूषणपण्डितप्रवरश्रीविश्वेश्वरशर्मणः कृतिः। इयं च नायकनायिकादीनां परिष्कृतलक्षणनवीनप्रायोदाहरणरसादिनिरूपणादिभिः स्व-

सदृशानपरान् प्रबन्धानतिशेत इत्यत्र न बहुवचनप्रपञ्चनस्य प्रयोजनम्। प्रबन्धस्यास्यादौ ग्रन्थनिर्मितिप्रयोजनं कथयता तेन पण्डितप्रवरेणोद्घुष्टम्—

**सारासारविचारैकपरायणहृदां सताम्।**
**चमत्कारप्रकाराय क्रियते रसचन्द्रिका।।**

तेन प्रथमं नायकनायिकाभेदनिरूपणं कृतम्। निरूपणप्राथम्ये हेतुमभिदधता तेन कथितं यद् रसस्य प्रादुर्भावे नायिकानायकावेवासाधारणकारणं भवतः, तस्मात् तावेव प्रथमं निरूप्येते। तयोर्भेदप्रभेदं सोदाहरणं प्रस्तुतमादौ। तत्रापि बहुवक्तव्यत्वात्प्रथमं नायिका निरूपिता। सा स्वीया-परकीया-सामान्याभेदेन त्रिविधा। तत्र पतिमात्रविषयकानुरागवती स्वीया। परपरिणीतत्वे सति स्वानुरक्ता परकीया। वित्ताभाववता सहास्याः सम्भोगो मा भूदित्येतादृशेच्छाविषयत्वे सत्यनुरक्ता सामान्या। तासां प्रभेदपुरस्सरं बहु व्याख्यातम्, विशेषजिज्ञासानिवृत्तये तत्रैवावलोकनीयं सुधीजनैः। सामान्येन नायिकाभेदानां सङ्कलनमित्थं कृतम्।

इह मुग्धा तावदेकैव। मध्याप्रगल्भे धीरादिभेदेन षट्, ज्येष्ठाकनिष्ठाभेदेन द्वादशेति त्रयोदश स्वीयाभेदाः। परोढा कन्यका चेति परिकीयाद्वैविध्यम्। सामान्या एकैवेति षोडशभेदाः। तासां च वक्ष्यमाणैरष्टाभिर्भेदैरष्टाविंशत्यधिकशतं भेदाः। प्रत्येकमुत्तमादिभेदत्रयेण शतत्रयं चतुरशीतिश्च भेदा भवन्ति। तत्र प्राचीनसम्मतिं प्रदर्शयता चोक्तम्—

**त्रयोदशविधा स्वीया द्विविधा च पराङ्गना।**
**एका वेश्या पुनश्चाष्टाववस्थाभेदतो मताः।।**
**पुनस्तास्त्रिविधाः सर्वा उत्तमाधममध्यमाः।**
**इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा।।**
**जातिकालवयोऽवस्थाभावकन्दर्पनायकैः।**
**इतरा अप्यसङ्ख्याता नोक्ता विस्तरभीतितः।।** (रसच०, पृ० १५)

प्रसङ्गेऽस्मिन् सखी-दूत्यादीनां निरूपणं विहितम्। तत्र 'नाप्रामाण्यं लिखितं किञ्चित्' इति मतं प्रमाणयता भरत-क्षीरस्वामि-विद्यानाथ-भोजराज-अमरसिंह-विश्वनाथादीनां मतं प्रस्तुतम्।

नायकनिरूपणप्रसङ्गे तस्य भेदत्रयं प्रतिपादितम्, पत्युपपतिवैशिकभेदात्। विवाहजन्यसंहकारवान् पतिः। तद्भिन्नत्वे सत्यनुरागविषय उपपतिः। वेश्योपभोगरसिको वैशिकः। तेषां सप्रभेदं लक्षणोदाहरणं च प्रस्तुतम्। नायकस्य

सहायाश्चतुर्द्धा, पीठमर्द-विट-चेटक-विदूषकभेदात्। तेषामपि लक्षणोदाहरणं प्रस्तुतम्। तत्र विद्यानाथस्य सम्मतिं प्रस्तौति—

**किञ्चिदूनः पीठमर्द एकविद्यो विटः स्मृतः।**
**सन्धाननिपुणश्चेटो हास्यप्रायो विदूषकः।।** (रसच॰, पृ॰३३)

एतेषां नायकानुकूलाचरणं व्यापारः। तेषां व्यापारस्योदाहरणं श्रीरुद्रचन्द्रदेवानां प्रस्तौति। यथा—

**मानं त्यक्ष्यसि कान्तमेष्यसि पुनः सम्भावयिष्यस्यलं**
**भूषाः पास्यसि वारुणीं रतिकलाकेलिं समारोक्ष्यसि।**
**किञ्च त्वां विनिवेदयामि सरले! मन्दानिलोल्लासिता**
**प्रालेयांशुकृतोदया मधुनिशा हस्तं गता हार्यते।।**

अथ रसनिरूपणप्रसङ्गे त्रिविधा शक्तिर्लक्षणा व्यञ्जना च वृत्तिर्निरूपिता। रसोऽसंल्लक्ष्यक्रमो ध्वनिर्भवति। ननु रसस्यासंल्लक्ष्यक्रमत्वं कथमिति चेत्, उच्यते— न हि विभावादय एव रसाः; किन्तु रसस्तैर्निष्पद्यत इत्यस्ति क्रमः। तत्क्रमसत्त्वेऽपि क्रमानवबोधात्। तत्र प्रमाणरूपेण भरतसूत्रं प्रस्तौति—

'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति। सूत्रस्यास्य व्याख्याने भट्टलोल्लट-श्रीशङ्कुक-भट्टनायक-अभिनवगुप्तपादाचार्याणां मतं प्रस्थापयति। अस्मिन् क्रमे शृङ्गारं सभेदं प्रपञ्चयति। स्थायिभावस्य लक्षणं विदधता तेनोक्तम्—

**सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान्।**
**यावद्रसं वर्तमानः स्थायी भाव उदाहृतः।।**

तत्र भरतस्य सम्मतिं प्रस्तौति—

**यथा नराणां नृपतिः शिष्याणां गुरवो यथा।**
**तथैव सर्वभावानां स्थायी भावो महानिह।।**

पुनः भावस्याभासस्य च लक्षणमुदाहरणपुरस्सरं व्याख्याति।

अनेन प्रकारेणासंल्लक्ष्यक्रमध्वनिं निरूप्य संल्लक्ष्यक्रमध्वनिं निरूपयति। तस्य त्रयोदशभेदा निरूपिताः। तद्यथा—

**द्वौ शाब्दी शक्तिरष्टार्थी द्व्युत्थैकं भेदमञ्चति।**
**द्वौ लक्षणेत्यमी भेदाः प्राधान्येन त्रयोदश।।** (रसच॰, पृ॰४५)

रसभेदनिरूपणक्रमे शान्तरसस्य स्थापना काव्ये मतान्तरप्रदर्शनपुरस्सरं कृता। पुनः व्यभिचारिभावानां निरूपणं कृतम्। अस्मिन्नेव क्रमे स्तम्भाद्यष्टभावानां निरूपणं विहितम्। तदनन्तरं यौवनकालीनभावान् निरूप्य लीलादिदशहावजन्यचेष्टाविशेषाः कथिताः। हावभावादीनां विवेकं प्रस्तुवन् कथयति ग्रन्थकारो विश्वेश्वरः—अनभिव्यक्तो मानसो विकारो भावः, किञ्चिदभिव्यक्तो हावः, स्फुटतरमभिव्यक्तो हेलेति। तेन—

**बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत्।**
**भाव इत्युच्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः।।** (रसच०, पृ०७२)

इति हलायुधकोशस्य प्रमाणं प्रस्तौति। अथ स्वाभाविकगुणान् प्रतिपादयति। तद्यथा—

**शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च।**
**धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः।।** (रसच०, पृ०७५)

तेषां लक्षणोदाहरणं च निरूपयति। प्रशान्ते ग्रन्थे लोके ग्रन्थस्यास्य स्वकीयस्य मुदप्रदायकत्वस्य कामनां विधाय मौनमालम्बते। तद्यथा—

**श्रीमन्महीमहिततत्तदसीमधीम-**
**न्मूर्द्धन्यताकलनसङ्गतधन्यताकः।**
**लक्ष्मीधरोऽयमुदसूत मुदं प्रसूतां**
**विश्वेश्वरस्य कृतिरस्य चिरस्य लोके।।**

इत्थं ग्रन्थोऽयं साहित्यसारभूतस्य रसस्य सारसङ्ग्राहकः प्रकरणरूपो विलसतितराम्।

**प्रस्तुतं संस्करणम्**

आचार्यविश्वेश्वरपाण्डेयप्रणीता रसचन्द्रिकेयं विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिं ४०६९७ संख्याकामाधारीकृत्य संशोध्य सम्पाद्य च प्रकाश्यते विश्वविद्यालयेनानेन लघुग्रन्थमालायाम्। यद्यपीतः पूर्वमपि श्रीजयकृष्णदासद्वारा १९८३ वैक्रमाब्दे प्राकाश्यं नीता रसचन्द्रिकेयम्; किन्त्विदानीं सा दुर्लभतां प्राप्ता। तया पाठसंशोधने बहुसाहाय्यं प्राप्तमेतदर्थं तस्मै नैकविधप्रबन्धरत्नमुद्रणबद्धपरिकराय श्रीजयकृष्णदासमहोदयाय सबहुमानं सादरं कृतज्ञतां विनिवेदयामि। ग्रन्थस्यास्य भूमिकायां ग्रन्थकारस्य व्यक्तित्वकृतित्वप्रकाशकमितिवृत्तं प्रस्तुतम्। विषयनिर्देशिका बृहद्विषयानुक्रमणिका

प्रतिपादिता। परिशिष्टभागे च श्लोकार्द्धानुक्रमणिका, ग्रन्थे स्मृतानां ग्रन्थानां ग्रन्थकाराणाञ्चानुक्रमणिकापि सुनिबद्धा। तस्मादस्य नावीन्यमक्षुण्णमस्तीति नास्त्यत्र सन्देहलेशावसर:।

ग्रन्थस्यास्य सम्पादने कृतसहायानामाधमर्ण्यं बिभ्रन् सर्वप्रथमं विश्वविद्यालयस्यास्य कुलपतिवर्य्यान् महनीयकीर्तिभाज: कविकुलचूडामणीन् मिश्रोपाधिविभूषितान् **प्रो. 'अभिराज'-राजेन्द्रमिश्रमहोदयान्** नतमस्तकेनाभिवादयामि, येषां कृपालवलेशेन ग्रन्थरत्नोऽयं सम्पाद्य प्रकाश्यतां नीयते। अत: परं प्रकाशनसंस्थानस्य निदेशकेभ्यो रुचिरोत्तमोत्तमप्रकाशनकाष्ठायां परां काष्ठामाटीकमानेभ्यो दिवानिशमस्मत्सदृशानां विकासे निबद्धपरिकरेभ्यो **डॉ॰ हरिश्चन्द्रमणित्रिपाठिमहोदयेभ्य:** सश्रद्धं प्रणामाञ्जलिं समर्पयन् नितरामात्मसन्तुष्टिमधिगच्छामि। किञ्च समये समये साहाय्यप्रदायकाय ग्रन्थस्यास्य सम्पादने दत्तसहायकाय सहायकसम्पादकाय **डॉ॰ ददन-उपाध्यायाय** साधुवादपुरस्सरं कृतज्ञतां वितरामि। अथ च श्रीजीकम्प्यूटरप्रिण्टर्ससञ्चालकान् **श्रीअनूपकुमारनागर**महाशयान् प्रकाशनौपयिकसौविध्यप्रदानोत्कानभिशंसामि धन्यवादम्।

अन्ते च विश्वेश्वरस्य भगवत: सान्नपूर्णस्य श्रीकाशीविश्वनाथस्य पदपद्मयो: साञ्जलिप्रणतितर्तीर्विनिवेद्य यथौचित्यं मानप्रदानाय दोषविस्मरणाय च कृतिनो मनीषिण: प्रार्थयमानो विरमति—

**वाराणस्याम्,**
गुरुपूर्णिमायाम्,
२०५९ तमे वैक्रमाब्दे

**हरिवंशकुमारपाण्डेय:**
ईक्ष्यशोधक:, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणिका

| विषयाः | पृष्ठाङ्काः |
|---|---|

श्रीविश्वेश्वरपाण्डेयविरचिता

# रसचन्द्रिका

तिर्यङ्मात्रप्रवणनयनोपान्तदृश्यत्वलोभा-
दन्योन्यार्द्धावयवघटितं स्वाङ्गमाधायि याभ्याम्।
तौ सद्रूपावपि जनकतां जन्यमात्रे भजन्तौ
देवावाद्यौ जगति जयतः प्रेमसीमायमानौ।।१।।

जयति यथाजातानां[1] वाग्जातसुजातपारिजातश्रीः।
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः।।२।।

सारासारविचारैकपरायणहृदां सताम्।
चमत्कारप्रकाराय क्रियते रसचन्द्रिका।।३।।

इह खलु नायकसमवेतायां रतौ नायिका विषयः, नायिकासमवेतायां च नायक[2] इति विषयस्य रतावसाधारणकारणत्वमिति तौ निरूप्येते। तत्र नियामकाभावाद्ग्रन्थभेदेन पौर्वापर्यानियमदर्शनेऽपि इच्छाया एव नियामकत्वादिह बहुवक्तव्यत्वात्प्रथमं नायिका निरूप्यते। सा त्रिविधा—स्वीया परकीया सामान्या चेति। तत्र पतिमात्रविषयकानुरागवती स्वीया। पतिश्च विवाहजन्यसंस्कारविशेषवान्। उभयानुरक्तायामतिव्याप्तिवारणाय मात्रेति। सा यथा—

सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं
चेतः कान्तसमीहितावधि महामानोऽपि मौनावधि।
हास्यं चाधरपल्लवावधि दृशोः कोणावधि प्रेक्षितं
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं विद्यते।।

---

१. यथाजातानाम्=मूर्खाणाम्।

२. तथा च विषयत्वसम्बन्धावच्छिन्ननायिकानिष्ठरतिनिष्ठकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्नकारणता तच्छालित्वं नायकत्वमिति नायकलक्षणं पर्यवसन्नम्। एवं नायिकालक्षणमप्यूह्यम्।

परं=केवलम्। अस्याश्चेष्टा-शीलसंरक्षणं कुलटादिसंसर्गपरिहारः। स च 'सकृदपि कुलटाभिर्योगिनीभिक्षुकीभि[१]र्नटविटघटिताभिः संसृजेन्मेलिकाभिः'।। (**रतिर.** भार्याधिकारे, प. १२, श्लो. ४) इति **कामशास्त्रे**, 'न गणिकाधूर्त्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्, संसर्गो हि चारित्रं दुष्यति' इति **शङ्खस्मृत्यादौ** चोक्तः। भर्तृसेवा तदानुकूल्यम् अहितात्तन्निवर्त्तनं च[२]।

**'पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया।**
**कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा।।**

इति **योगीश्वरोक्तेः**। हितमायतिसुखमिति **विज्ञानेश्वरः**। 'तत्र निषिद्धोद्युक्तः प्रतिषेद्धव्यः प्रणामाद्यैः' इति **कामशास्त्रम्**। सेयं त्रिविधा मुग्धा मध्या प्रगल्भा च। तत्र लज्जापेक्षापकर्षवद्रतिका मुग्धा। अपकर्षश्च द्विधा। स्वरूपेण तत्प्रतिवध्यव्यापारकत्वेन च। द्वितीयमपि द्वेधा। व्यापारे यावत्त्व-यत्किञ्चित्त्वयोर्विवक्षाभेदात्। आद्या अज्ञातयौवना। द्वितीया नवोढा। तृतीया विश्रब्धनवोढा। नवोढादिभेदद्वयं ज्ञातयौवनाया बोध्यम्। तथा च **भरतः** —

**'पीनोरुगण्डजघनस्तनाधरं कर्कशं रतिमनोज्ञम्।**
**सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं विद्यात्'।।**

पीनपदं किञ्चिदुपचयाभिप्रायम्।

**'गात्रं पूर्णावयवं पीनौ च पयोधरौ नतं मध्यम्।**
**कामस्य सारभूतं यौवनमेतद् द्वितीयं तु'।।**

इति तदुक्तेः। तथा च प्रथमयौवनस्य पूर्वापरावस्थाद्वयमत्राज्ञातज्ञातताभ्यां विवक्षित्वा भेदद्वयाभिधानम्। ज्ञानं च स्वनिष्ठं परनिष्ठं वेत्यत्र नाग्रहः।

**सामान्योदाहरणं यथा—**

**उरःस्थलमदन्तुरं वचसि नाश्रिता चातुरी**
**विकारि न विलोकितं न च मुखे स्मितस्योद्गमः।**
**तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटा।**
**पटावृतमहामणिद्युतिरिवात्र संलक्ष्यते।।**

---

१. अत्र न च इति पाठः समीचीनो भवेत्। तस्य च संसृजेद् इत्यनेनान्वयः। अत्र 'मेलिकाभिः' इत्यस्य वशीकारादिप्रयोगेण सम्मेलनकारिकाभिरित्यर्थः। **रतिरहस्ये** तु 'मौलिकीभिः' इति पाठः। तत्र मूलेन वशीकरणकर्मणा चरन्तीत्यर्थे ठक्प्रत्ययो बोध्यः।

२. अस्य चेष्टेति पूर्वेणान्वयः।

यौवनस्य लेशमात्रेणाप्यनुदये रत्यालम्बनत्वे प्रमाणाभावात्किञ्चित्तदुन्मेषो मुग्धाया आवश्यकः। नायिकाविभाजकोपाधिमध्ये रत्यालम्बनदशायामसतो धर्मस्य परिगणनानर्हत्वात्। एतेन—

सुधायाः सध्रीची न च वचनवीची वरतनोः
स्तनश्रीः कर्क्कन्धूफलमपि न बन्धूकृतवती।
न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयो-
स्तथापि श्रीरस्या युवजननमस्या विजयते।।

इत्यादिकमपि व्याख्यातम्।

**अज्ञातयौवना यथा मम—**

व्युत्तिष्ठन्ते हृदयगतयो बालकेलीकलापा
नाप्यन्यस्मिन् सजति विषये लेशतोऽप्यात्मवृत्तिः।
एतत्किं स्यादिति नववधूरन्तरालोचयन्ती
धत्ते दोलामिव तरलताशालिनीमेव बुद्धिम्।।

**ज्ञातयौवना यथा मम—**

जाता कुहूरुतरवा विहसन्मुखश्री-
र्लब्धा तपःश्रवणसंयुतदृष्टिपाता।
अर्द्धोदये सति पयोधरयोः प्रियस्ते
पुण्यं प्रकाशयतु तत्परिशीलनेन[१]।।

इयमेव रतिकार्याभिभवसमर्थलज्जायोगाद् नवोढा, लज्जायाः किञ्चिदपकर्षे विश्रब्धनवोढा, लज्जामदनयोः साम्ये तु मध्या वक्ष्यते। केचित्तु विश्रब्धनवोढाया

---

१. नायिकां प्रति सख्या उक्तिः। अत्र कुहूः उत रवौ इहेति च्छेदः। उतेत्यानन्दे। सन्मुखश्रीः रवौ=रविवारे जाता तपसि माघे श्रवणनक्षत्रयुतः दृष्टं दर्शनमस्यास्तीति दृष्टी दृष्ट इत्यर्थः। पातः=व्यतीपातो यस्यां सा। कुहूः=अमा लब्धा। एतेन—

अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः।।

इति **स्कन्दपुराणाद्युक्तो**ऽर्धोदयाख्यो योगः सूचितः। यत्र स्नानादिना स्वर्गो भोगश्च जायते। पक्षे—कुहूरुतरवेत्येकं पदम्। कुहूरुतं कोकिलशब्दः, तदिव रवो यस्याः। विहसन्मुखश्रीः तपसा श्रवणसंयुतदृष्टिपातः कर्णान्तिगतदृक्पातो यस्याः सा त्वं प्रियेणेति शेषः। लब्धा। स्तनयोः अर्धाविर्भावे सति प्रियः तयोः=स्तनयोः परिशीलनेन मर्दनेन पुण्यम् अर्धोदयस्नानजं प्रकटीकरोतु। अर्धोदयस्नाकर्तॄणां त्वादृश्यः स्त्रियो भवन्तीति भावः।

मध्यमायामेवान्तर्भावमिच्छन्ति। तथा च विद्यानाथः —

उदयद्यौवना मुग्धा लज्जापिहितमन्मथा।
लज्जामन्मथमध्यस्था मध्यमोदितयौवना।।
स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना।। इति।

आद्या यथा मम—

नीता प्राणसमेन दृग्विषयतां सद्यः परावर्त्तते
तस्मिन्सन्निहिते बुभूषति भवत्यस्माद्विदूरात्पुनः।
संयोगे विहितेऽपि तेन तनुते तस्माद्विभागं स्वयं
प्रायस्तत्प्रतिकूलमेव चरितं प्रीणाति वामभ्रुवः।।

द्वितीया यथा मम—

हस्तस्वस्तिकगोपितस्तनतटा सम्बद्धबिम्बाधरा
वक्षोदेशमिलन्मुखी दृढतरं लग्नोरुयुग्मा मिथः।
स्वप्नोद्भावितत‌द्विरोधिदयितव्यापाररोधोल्लस-
त्तद्यत्नेन धिनोति नूतनवधूप्रस्वापरीतिर्मनः।।

[1]समप्रधानलज्जामदना मध्या। इयमेवातिविश्रब्धनवोढा। यथा—

जं जं सो णिज्झाअइ अङ्गोआसं मह अणिमिसच्छो।
पच्छाएमि अ तन्तं इच्छामि अ तेण दीसन्तम्[2]।।

अत्र नायकेन द्रष्टुमिष्यमाणस्याङ्गस्य आच्छादनेन लज्जायास्तेन दृश्यतामितीच्छया कामस्य च समं प्राधान्यम्। लज्जाभिभावकमदना प्रगल्भा। तस्याश्चेष्टा रतिप्रीतिरानन्दात्सम्मोहश्च। आद्या यथा—

आणासआइ देन्ती तह सुरए हरिसविअसितकवोला।
गोसेवि ओणअमुही अह सत्ति पिआ ण सद्दहिमो[3]।।

---

१. समप्रधानौ तुल्यप्रधानौ लज्जामदनौ यस्याः सा। तुल्यत्वं च परस्परनिष्ठप्रतिबन्धकता-निरूपितप्रतिवध्यताशालिव्यापारकत्वम्। तथा च लज्जाप्रतिबद्धमदनव्यापारकत्वे सति मदनप्रतिबद्धकिञ्चिल्लज्जाव्यापारकत्वं मध्यात्वमिति फलितम्।

२. यद्यत्स निभालयत्यङ्गोपाङ्गं ममानिमिषाक्षः।
प्रच्छादयामि च तत्तदिच्छामि च तेन दृश्यमानम्।। इति च्छाया।

३. आज्ञाशतानि ददती तथा सुरते हर्षविकसितकपोला।
प्रभातेऽप्यवनतमुखी अथ सेति प्रिया न श्रद्दध्मः।।इति च्छाया।

**द्वितीया यथा—**

**धन्यासि या कथयसि प्रियसङ्गमेऽपि**
**विश्रब्धचाटुकशतानि रतान्तरेषु।**
**नीवीं प्रति प्रणिहिते तु करे प्रियेण**
**सख्यः शपामि यदि किञ्चिदपि स्मरामि।।**

मध्या-प्रगल्भयोर्मानावस्थायां त्रयो भेदा:—धीरा अधीरा धीराधीरा चेति। तदुक्तं दर्पणे—

**'ते धीरा चाप्यधीरा च धीराधीरा च षड्विधे।**
**प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा।।**
**धीराऽधीरा तु रुदितैरधीरा परुषोक्तिभिः।**
**प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा।।**
**उदास्ते सुरते तत्र दर्शयत्यादरान्बहिः।**
**धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्।।**
**तर्जयेत्ताडयेदन्या...........**।।इति। (साहि. द. प. ३)

अन्या अधीराप्रगल्भेत्यर्थ:।

**मध्याधीरा यथा मम—**

**पलाशकुसुमानि ते वपुषि बिभ्रते दृश्यतां**
**वहन्ति वदनानिला मलयजस्फुरत्सौरभाः।**
**इयं दयित! माधवी मधुरता समाधीयते**
**ततो भवति मीयते कुसुमधन्वनः सौहृदम्।।**

**अधीरा यथा—**

**तेण ण मरामि मण्णूहि पूरिआ जेण रेसुहअ।**
**तुग्गअमणा मरंती पुणोवि मा तुज्झ लग्गिस्सम्[१]।।**

---

१. तेन न म्रिये मन्युभिः पूरिता येन रे सुभग!।
त्वद्गतमना म्रियमाणा पुनरपि मा त्वामेव लगिष्ये।।इति च्छाया।

**धीराधीरा यथा—**

**वाहोल्लफुरिअगंडाहराइ भणिअं विलक्ख हसिरीए।**
**अज्जवि कीस रूसिज्जइ सवहावत्थं गए प्पेम्मे[1]।।**

**प्रगल्भा यथा—**

**एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-**
**स्ताम्बूलाहरणच्छलेन रभसाश्लेषोऽपि संविघ्नितः।**
**आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके**
**कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः।।**

अत्र सामानाधिकरण्याद्यनुपपादनद्वारकं रतौदास्यम्। तत्सत्त्वेऽपि यथा—

**जाणइ जाणावेउं अणुणअविद्दवि अमाणपरिसेसम्।**
**पइरिक्वम्मिवि विणआवलम्वणं सच्चिअ कुणंती[2]।।**

अत्रैकान्तादिसत्त्वेऽपि विनयालम्बनात्तत्।

**अधीरा यथा—**

**कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं**
**नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः।**
**भूयो मैवमिति स्खलन्मृदुगिरा सञ्चिन्त्य दुश्चेष्टितं**
**धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदन्त्या हसन्।।**

**धीराधीरा यथा मम—**

**आलक्ष्यैव विपक्षपक्ष्मलदृशो वक्षोरुहाद्वक्षसि**
**प्राणेशस्य घनानुषङ्गि घुसृणं वक्रीबुभूषाजुषा।**
**उत्तंसोत्पलमुत्तरत्वरपरावृत्तिस्यदात् प्रस्खल-**
**न्नेत्रस्य प्रतियातनेव दयितं द्रष्टुं विसृष्टं रसात्।।**

धीरादिभेदाः स्वीयायामेव। परकीयादौ मानसत्त्वेऽपि नायकस्य नायकान्तर-सम्भोगमभ्युपगम्यैव तत्रानुरक्तत्वादुक्तभेदप्रयोजकत्वाभावादिति प्राञ्चः। नव्यास्तु

---

१. वाष्पार्द्रस्फुरितगण्डाधरया भणितं विलक्ष्य हसितया।
अद्यापि कुतो रुष्यते शपथावस्थां गते प्रेम्णि।।इति च्छाया।

२. जानाति ज्ञापयितुमनुनयविद्रावितमानपरिशेषम्।
पत्युरेकान्तेऽपि विनयावलम्बनं सत्यमिव कुर्वन्ती।।इति च्छाया।

स्वीयाया अपि नायकस्यान्यसम्भोगानभ्युपगमेनानुरागोत्पत्तौ मानाभावान्मानस्य सर्वत्र कादाचित्कतया निमित्तत्वोपपत्तेश्च परकीयादेरप्युक्तभेदाङ्गीकारो युक्त इत्याहुः। एताश्च ज्येष्ठाः कनिष्ठाश्चेति द्विधाः। परिणायकनिष्ठोत्कृष्टस्नेहविषयभूता ज्येष्ठा। तादृशापकृष्टस्नेहविषयभूता कनिष्ठा। ज्येष्ठाभेदेषु **धीरा यथा**—

**पुसिआ कण्णाहरणेंदणीलकिरणाहआ ससिमऊहाः।**
**माणिणिवअणम्मि सकज्जलसुसंकाइ दइएण[1]।।**

**अधीरा यथा**—

**हिअअम्मि वससि ण करेसि अप्पिअं तहवि णेहपडिएहिं।**
**सङ्किज्जसि जुअइसहावगलिअधीरेहि अह्मेहिं[2]।।**

**धीराधीरा यथा**—

**णवि तह अणालवंती हिअअं दूमेइ माणिणी अहिअं।**
**जह दूरविअम्भिअगरुअरोससमज्झत्थबअणेहिं[3]।।**

**कनिष्ठाभेदेषु धीरा यथा**—

**अणुणअ णाहं कुविआउअऊहसु किं मुहा पमाएसि।**
**तुह मण्णुसमुप्पाअएण माणेणवि ण कज्जम्[4]।।**

**अधीरा यथा**—

**पिअविरहो अप्पिअदंसणं अ गरुआइ दोवि दुक्खाइं।**
**जीआ तुमं कारिज्झसि तीअ णमो आहि आईए[5]।।**

---

१. प्रोञ्छिताः कर्णाभरणेन्द्रनीलकिरणाहताः शशिमयूखाः।
मानिनीवदने सकज्जलसुशङ्कया दयितेन।।इति च्छाया।

२. हृदये वससि न करोषि अप्रियं तथापि स्नेहपतिताभिः।
शङ्क्यसे युवतीस्वभावगलितधैर्याभिरस्माभिः।।इति च्छाया।

३. नापि तथा अनालपन्ती हृदयं दुनोति मानिन्यधिकम्।
यथा दूरविजृम्भितगुरुकरोषमग्नार्थवचनैः।।इति च्छाया।

४. अनुनय नाथं कुपिता मुहुर्मुहुः किं प्रमाद्यसे।
तव मन्यूत्पादकेन मानेनापि न कार्यम्।।इति च्छाया।

५. प्रियविरहोऽप्रियदर्शनं च गुरुणी द्वे अपि दुःखे।
यया त्वं कार्यसे तस्यै नमोऽस्त्वायत्यै।।इति च्छाया।

**धीराधीरा यथा—**

**सा सुहअ अहिअगुणरूअसोहिरीआ मणिग्गुणाअहअं।**
**भण तीअ जो णसरिसो सो किं सब्वो जणो मरउ[१]।।**

**।। इति स्वकीया ।।**

परपरिणीतत्वे सति स्वानुरक्ता परकीया। स्वपदं यन्निरूपितं परकीयात्वं तत्परम्। परिणीतपदेन सामान्यायां परपदेन स्वकीयायामतिव्याप्तिनिरासः। नन्वेवं कन्यकायामव्याप्तिः। परोढाकन्यकाभेदेन परकीयाद्वैविध्यस्याभियुक्तैरङ्गीकारात्। न च स्वापरिणीतत्वं सत्यन्तार्थः। सामान्यायामतिव्याप्तेः। सत्यम्। यथोक्ता कन्यका चेत्येतदन्यतरत्वं परकीयात्वमिति तात्पर्यात्। वस्तुतस्तु यद्विषयकानुरागवत्त्वज्ञानेन लोकानां तस्यां विगानं तदनुरक्तत्वं लक्षणं बोध्यम्। यथा—

**अनाहूतैवैत्य प्रगुणगुणलोभेन भवतः**
**समीहे सौभाग्यं तदिदमुपहासं प्रथयति।**
**विदग्ध! त्वामेवं तदपि कथयाम्याचर तथा**
**यथा न स्यादालीकपटकरतालीपटुरवः।।**

सा च गुप्ता विदग्धा लक्षिता कुलटानुशयाना मुदिता कन्यका चेति सप्तविधा। तदुक्तम्—

**गुप्ताविदग्धाकुलटानुशयानादयस्तु याः।**
**परकीयासु सर्वासामन्तर्भावो निरूपितः।।**

तत्र **गुप्ता** त्रिविधा, भूतभाविवर्त्तमानरतगोपनभेदात्।

**आद्या यथा—**

**हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता**
**वक्त्रे चन्द्रधिया चकार कुपिता चक्री[२] नखैराक्रमम्।**
**भृङ्गैः पङ्कजकोरकप्रतिधिया वक्षोरुहोऽपि क्षत-**
**स्तन्मातः! करवै पुनर्न सरसीतोयावगाहोद्यमम्।।**

---

१. सा सुभग! अधिकगुणरूपशोभिता मनाग्गुणा चाहम्।
भण किं तस्य यो न सदृशः स सर्वो जनो म्रियताम्।।इति च्छाया।

२. चक्री=चक्रवाकी।

द्वितीया यथा—

दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः।।

तृतीया यथा—

गहवइ गओह्मसरणं रक्खसु एअंति अडअणा भणिअ।
सहसागअस्स तुरिअं पइणो कण्ठं मिलाएइ[1]।।

अत्र शरणागतोऽयमिति जारस्य भर्त्रे समर्पणम्। विदग्धा द्विविधा—वाग्विदग्धा, क्रियाविदग्धा च।

आद्या यथा—

नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्त्वा मामिह पुष्पिणीति[2] गुरवः प्राप्ता गृहाभ्यन्तरम्।
शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते
स्वामिन्नागमलालनीय[3] रजनीं[4] लक्ष्मीपते! रक्ष माम्।।

द्वितीया यथा—

नाथेऽनिशं निजनिवाससमीपनीप-
मुच्छेत्तुमादिशति संसदि सेवकेभ्यः।
खिन्ना वधूः सखि! सदैव सदैवतोऽय-
मुक्त्वेति तं सपदि पूजयितुं प्रतस्थे।।

अन्यैर्ज्ञातोपनायकानुरागा लक्षिता। यथा—

दिठ्ठीअजं ण दिठ्ठो सरलसहावाइ जं अणालविओ।
उअआरो जं ण कओ तंच्चिअ कलिअं छइल्लेहिं[5]।।

---

१. गृहपते गतोऽस्मच्छरणं रक्षस्वैनमिति स्वैरिणी भणित्वा।
सहसागतस्य पत्युस्त्वरितं कण्ठे मेलयति।।इति च्छाया।

२. पुष्पिणी=रजस्वला।

३. आगमलालनीय!=विष्णुपक्षे वेदस्तुत्य! जारपक्षे आगमेन आगमनेन लालनीय!।

४. रजनीमिति रात्रिं व्याप्येत्यर्थः। अत्यन्तसंयोगे द्वितीया।

५. दिष्ट्या यत्र दृष्टः सरलस्वभावया यदनालपितः।
उपचारो यत्र कृतस्तदपि च कलितं विदग्धैः।।इति च्छाया।

परिणीतत्वे सति अनेकानुरागिणी **कुलटा**। यथा—

**पृथ्वी तावत्त्रिकोणा नगनगरगिरिग्रामरुद्धं तदर्द्धं**
**तत्राप्यर्द्धं युवत्यः शिशुविगतवयोदूषितं यत्तदर्द्धम्।**
**त्याज्यास्तत्रापि पुत्रश्वशुरगुरुजनाः शेषवन्तः कियन्तो**
**मिथ्यावादो जनानां मुखरमुखरवः पुंश्चली पुंश्चलीति।।**

सङ्केतविघटनदुःखवत्य**नुशयाना**। सा च त्रिधा। स्वविरहितसङ्केतस्थाने नायकगमनज्ञानवती, सङ्केतस्थानस्य स्वरूपतो विघटनज्ञानवती, भाविसङ्केतस्थानाभावशङ्कावती चेति।

**आद्या यथा—**

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया।।**

**द्वितीया यथा—**

**वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कस्स।**
**अज्जा कज्जेण विणा पलिप्पमाणे णईकच्छे[1]।।**

**तृतीया यथा—**

**किं रुअसि ओणअमुही धवलाअंतेसु शालिछेत्तेसु।**
**हरिआलमंडिअमुही णडिव्व शणवाडिआ जाआ[2]।।**

प्रियप्राप्तिजन्यानन्दवती **मुदिता**। यथा—

**अलससिरमणी धुत्ताण आग्गिमो पुत्ति धणसमिद्धिमओ।**
**इअ भणिएण णअंगी पप्फुल्लविलोअणा जाआ[3]।।**

**कन्यका यथा—**

**आरोपिता शिलायामश्मेव त्वं स्थिरेति मन्त्रेण।**
**मग्नापि परिणयापदि जारमुखं वीक्ष्य हसितैव।।**

**।। इति परकीया।।**

१. व्याहृता प्रतिवचनं न ददाति रुष्यति एकमेकस्य।
आर्या कार्येण विना प्रदीप्यमाने नदीकच्छे।।इति च्छाया।

२. किं रोदिषि अनवतमुखी धवलायमानेषु शालिक्षेत्रेषु।
हरितालमण्डितमुखी नटीव शणवाटिका जाता।।इति च्छाया।

३. अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि! धनसमृद्धिमयः।
इति भणितेन नताङ्गी प्रोत्फुल्लविलोचना जाता।।इति च्छाया।

वित्ताभाववता सहास्याः सम्भोगो मा भूदित्येतादृशेच्छाविषयत्वे सत्यनुरक्ता सामान्या। विषयत्वं चेच्छाविशेष्याभावप्रतियोगिप्रतियोगित्वम्। भवति चोक्तेच्छा-विशेष्योऽस्याः सम्भोगाभावः, तत्र प्रतियोगी सम्भोगस्तत्प्रतियोगित्वं चास्याम्। तादृशेच्छा च क्वचिद्वेश्यायाः क्वचित्तन्मात्रादेरिति नाव्याप्तिः। यथा—

**क उव्वरिआ के उण ण वंचिआ के अलुत्तगुरुविहवा।**
**णहराइं बेसिणिओ गणणारेहा विअ वहन्ति[1]।।**

**।। इति सामान्या।।**

एताश्च तिस्रोऽपि अन्यसम्भोगदुःखिता, वक्रोक्तिगर्विता, मानवती चेति त्रिविधाः।

**आद्या यथा—**

**निःशेषच्युतचन्दनं स्तनतटं निर्मुक्तरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।**
**मिथ्यावादिनि! दूति! बान्धवजनस्याज्ञातपीडागमे!**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्।।**

गर्विता प्रेमगर्विता सौन्दर्यगर्विता च।

**आद्या यथा—**

**हल्लफलल्हाणपसाहिआण मज्झे सवत्तीणं।**
**अज्जाइ मज्जणाणाअरेण कहिअं व सौहग्गम्[2]।।**

**द्वितीया यथा—**

**गर्वमसम्भाव्यमिमं लोचनयुगलेन किं वहसि भद्रे!।**
**सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि।।**

मानस्तु द्विधा—प्रणयादीर्ष्यातश्च। तदुक्तं दर्पणे—

**'मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः।**
**द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि।।**
**प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना'।।**

---

१. के उर्वरिताः के पुनर्न वञ्चिताः के अलुप्तगुरुविभवाः।
नखराणि वेश्या गणनारेखा इव वहन्ति।।इति च्छाया।

२. हारिद्रफलस्नानप्रसाधितानां मध्ये सपत्नीनाम्।
आर्याया मज्जनानादरेण कथितमिव सौभाग्यम्।।इति च्छाया।

प्रियापराधातिरिक्तहेतुजन्यः कोपः प्रणयमानः। द्वयोरिति कदाचिन्नायिकायाः कदाचिन्नायकस्येत्यर्थः।

**आद्यो यथा—**

**पशुपइणो रोसारुणपडिमासङ्कंतगौरीमुहअन्दम्।**
**गहिअग्घपंकअंविअ संझासलिलंजलिं णमह[१]।।**

**द्वितीयो यथा—**

**अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः**
**सा हंसैः स्थिरकौतुका चिरमभूद्गोदावरीसैकते।**
**आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया**
**कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः।।**

**युगपद्यथा—**

**एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-**
**रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।**
**दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-**
**र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः।।**

**ईर्ष्यामानो यथा दर्पणे—**

**'पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते।**
**ईर्ष्यामानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा।।**
**तत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा'।।**

अपरस्त्रीदर्शनादिजन्योऽल्पयत्नसाध्यत्वात् लघुः। गोत्रस्खलनादिजन्यः कष्टसाध्यत्वान्मध्यमः। परस्त्रीसम्भोगजन्यो बहुप्रयाससाध्यत्वाद् गुरुः। अयं चोत्सर्गः। गोत्रस्खलनादिजन्यस्यापि क्वचिद्गुरुत्वात् परस्त्रीभोगजन्यस्यापि मुग्धादौ लघुत्वात्।

**लघुर्यथा—**

**जो कहंवि मह सहीहिं छिद्दं लहिऊण पेसिओ हिअअम्।**
**सो माणो चोरिअकामुओव्व दिट्ठे पिए णठ्ठो[२]।।**

---

१. पशुपते रोषारुणप्रतिमासङ्क्रान्तं गौरीमुखचन्द्रम्।
गृहीतार्घपङ्कजमिव सन्ध्यासलिलाञ्जलिं नमत।।इति च्छाया।

२. यः कथमपि मम सखीभिश्छिद्रं लब्ध्वा प्रवेशितो हृदयम्।
स मानश्चोरितकामुक इव दृष्टे प्रिये नष्टः।।इति च्छाया।

मध्यो यथा—

अवलंबिअ माणं परमुहीअ एतस्स माणिणि पिअस्स।
पुट्ठिपुलउग्गमो तुह कहेइ समुहट्ठिअं हिअअम्[१]।।

गुरुर्यथा—

णेउरकोटिविलग्गं चिउरं दइअस्स पाअपडिअस्स।
हिअअं पउत्थमाणं उम्मोअन्तिच्चिअ कहेइ[२]।।

प्रत्यक्षं यथा—

विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननानिलेन।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे।।

स्वप्नायितं यथा—

एते लक्ष्मण! जानकीविरहिणं मां पीडयन्त्यम्बुदा
मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः।
इत्थं व्याहृतपूर्वजन्मचरितो यो वीक्षितो राधया
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः।।

भोगाङ्कदर्शनं यथा—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य्य सहसा तत्सम्प्रमार्ष्टुं मया
सा श्लिष्टा रभसेन तत्सुखवशात्तस्याश्च तद्विस्मृतम्।।

गोत्रस्खलनं यथा—

मयि व्यक्तं गोत्रस्खलनमपराधं कृतवति
प्रसन्नैवास्यश्रीर्लवमपि न भेदं गतवती।
परं त्वस्या मन्युर्भयचकितदूतीविनिहितै-
रितः प्रत्यासन्नैरसरलदृगन्तैरभिहितः।।

---

१. अवलम्ब्य मानं पराङ्मुख्या एतस्य मानिनि! प्रियस्य।
पृष्ठपुलकोद्गमस्तव कथयति सम्मुखस्थितं हृदयम्।।इति च्छाया।

२. नूपुरकोटिविलग्नं चिकुरं दयितस्य पादपतितस्य।
हृदयं प्रोत्थितमानमुन्मोचयतीव कथयति।।इति च्छाया।

श्रवणं यथा मम—

प्रणयरभसादाभासत्वस्पृशां परिशीलना-
त्पिशुनवचसामन्तः सञ्चिन्तनेन तदागसाम्।
सितकररुचामाविर्भावाल्लसत्कुसुमायुध-
स्फुरितरमणोत्कण्ठाः सम्पेदिरे मदिरेक्षणाः।।

माननिवृत्त्युपाया यथा—

साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम्।
तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात्।।

तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम्।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः।।

सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम्।।

साम यथा—

देसु अणुपसिअ एह्णिं पुणोवि सुलहाइं रोसिअव्वाईं।
एसा मिअछि मिअलंछणुज्जला गलइ च्छणराई[१]।।

भेदो यथा—

मा कुण पडिवक्खसुहं अणुणेहि पइं पसाअलौहिल्लम्।
अइ गरुअगहिअमाणे णपुत्ति! रासिव्व छिज्जिहिसि[२]।।

दानं यथा—

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम्।
विट! विटपममुं ददस्व तस्यै
भवति यतः सदृशोश्चिराय योगः।। (मा.स.४।५३)

---

१. पश्यानुप्रसीद इदानीं पुनरपि सुलभानि रोषितव्यानि।
एषा मृगाक्षि मृगलाञ्छनोज्ज्वला गलति क्षणदा।।इति च्छाया।

२. मा कुरु प्रतिपक्षसुखमनुनय पतिं प्रसादलुब्धम्।
अयि गुरुकगृहीतमाने न पुत्रि! रात्रिरिव क्षीणा भविष्यसि।।इति च्छाया।

नतिर्यथा—

पाअपडिअं अहव्वे! किं दाणिं णोट्ठवेसि भर्त्तारम्।
एअंचिअ अवसाणं दूरंमि गअस्स पेम्मस्स[1]।।

उपेक्षा यथा—

स्वचरणपीडानुमितत्वन्मौलिरुजाविनीतमात्सर्य्या।
अपराद्धा सुभग! त्वां स्वयमहमनुनेतुमायाता।।

रसान्तरं यथा—

विग्रहाच्च शयने पराङ्मुखी-
नर्नानुनेतुमबलाः स तत्वरे।
आचकाङ्क्ष घनशब्दविक्लवा-
स्ताः स्वयं प्रविशतीर्भुजान्तरम्।। (र.वं.स.१९/३८)

असाध्यस्तु मानो रसाननुगुणत्वान्न प्रकृतोपयोगीति नात्रोपन्यस्तः। यथा—

तह माणो माणघणाइ एमेअ दूरमणुबद्धो।
जह से अणुणीअ पिओ एक्कग्गामेच्चिअपउत्थो[2]।।

इह मुग्धा तावदेकैव। मध्या-प्रगल्भे धीरादिभेदेन षट्, ज्येष्ठा-कनिष्ठाभेदेन द्वादशेति त्रयोदश स्वीयाभेदाः। परोढा कन्यका चेति परकीयाद्वैविध्यम्। सामान्या एकैवेति षोडश भेदाः। तासां च वक्ष्यमाणैरष्टाभिर्भेदैरष्टाविंशत्यधिकशतं भेदाः। प्रत्येकमुत्तमादिभेदत्रयेण शतत्रयं चतुरशीतिश्च भेदा भवन्ति। तदुक्तं प्राचीनैः—

'त्रयोदशविधा स्वीया द्विविधा च पराङ्गना।
एका वेश्या पुनश्चाष्टाववस्थाभेदतो मताः।।
पुनस्तास्त्रिविधाः सर्वा उत्तमाधममध्यमाः।
इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा।।
जातिकालवयोऽवस्थाभावकन्दर्पनायकैः।
इतरा अप्यसङ्ख्याता नोक्ता विस्तरभीतितः'।।

---

१. पादपतितमभद्रे किमिदानीं नोत्थापयसि भर्तारम्।
एतावदेवावसानं दूरं गतस्य प्रेम्णः।।इति च्छाया।

२. तथा मानो मानधनाया एवमेव दूरमनुबद्धः।
यथाऽस्या अनुनीय प्रिय एकग्राम एव प्रोषितः।।इति च्छाया।

दिव्यादिभेदास्तु न सम्भवन्ति। दिव्यत्वादेर्यावद्द्रव्यभावित्वेन अवस्थात्वाभावात्। अवस्थाभेदादेव भेदस्य शास्त्रकारैः परिगणितत्वात्। तद्व्यवहारोल्लङ्घने च दिव्यत्वादिव्याप्यविद्याधरत्वादिनापि भेदापत्तावुन्मत्तकलहप्रसङ्गात्।

ननु मुग्धायास्तथाविधज्ञानसामग्रीविरहाद्धीरादिभेदानुपपत्तिः। अत एव वक्ष्यमाणभेदाष्टकमध्येऽपि केचिद्भेदा अनुपपन्ना इति चेत्, सत्यम्, नवोढायां तदुपपत्तेः।

केचित्तु—परस्त्रियौ कन्यकोढे सङ्केतात्पूर्वं विरहोत्कण्ठिते पश्चाद्विदूषकादिभिः सहाभिसरन्त्यावभिसारिके कुतोऽपि सङ्केतस्थानमप्राप्ते नायके विप्रलब्धे इति त्रिविधे एव। तयोरस्वाधीनप्रिययोरवस्थान्तरानुपपत्तेरित्याहुः। तत्र, खण्डितादिभेदानामपि वक्ष्यमाणरीत्योपपत्तेः सख्यादिद्वारा प्रियागमनादिनिश्चये बाधकाभावादिति दिक्।

**अष्टभेदानाह भगवान्** भरतः—

**तत्र वासकसज्जा च विरहोत्कण्ठितापि वा।**
**स्वाधीनभर्तृका वापि कलहान्तरितापि वा।।**
**खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका।**
**तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः।।**

वाशब्दः समुच्चयार्थः। प्रियसमागमननिश्चयजन्यसम्भोगसामग्रीसम्पादनपरा **वासकसज्जा**। तदुक्तं मुनिना—

**'उचिते वासके या तु रतिसम्भोगलालसा।**
**मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका'।।**

अत्रोक्तनिश्चयजन्यानन्दवत्त्वं लक्षणम्। मण्डनादिकं तु चेष्टेति रहस्यम्।

**मुग्धा वासकसज्जा यथा मम—**

**मुग्धाक्ष्या दयितागमस्य दिवसं निर्णीय मानान्तरा-**
**न्मन्दाक्षातिशयात्प्रसाधनविधौ साक्षादपर्याप्तया।**
**पश्यत्येव सखीजने सुमनसामाकाङ्क्षया कैतवा-**
**त्कुञ्जान्तर्गमनादनायि वसनालङ्कारमुत्सारणम्।।**

**मध्या यथा मम—**

**सन्धत्ते श्रुतिसीम्नि गन्धफलिकां गण्डस्थलालम्बिनीं**
**पिण्डालक्तककर्दमेन चरणावारञ्जयत्यञ्जसा।**
**हैमान्याभरणानि कुङ्कुमरसार्द्रायां तनौ यच्छति**
**प्राप्याहर्दयितागमाधिकरणत्वेनावबुद्धं वधूः।।**

**प्रगल्भा यथा** श्रीरुद्रचन्द्रदेवानाम्—

**स्नात्वा वारिणि चन्दनैः सुरभिते धूपाकुले मालती-**
**पुष्पाणि प्रतिमुच्य केशनिचये कण्ठेऽपि पुष्पस्त्रजः।**
**भाले कुङ्कुमपत्रकं सुवसना कृत्वा स्थिता वासके**
**कान्तस्यानयनाय सौरभततीमादिश्य दूतीमिव।।**

**परकीया यथा मम—**

**निर्णीय प्रतिवेशिनां श्रुतिवशादभ्यागमं प्रेयसो**
**नन्दिन्या सहसा विधाय कलहारम्भं विना हेतुना।**
**वारेऽपि प्रतिसुभ्रुवो गृहपतेः सस्नेहमात्मीयता-**
**मध्यारोप्य सुमध्यया तनुलतासंस्कार आरभ्यते।।**

**सामान्या यथा मम—**

**धत्ते लोभमिव प्रसृत्वरतरं रत्नांशुजालं तनौ**
**दत्ते चाटुमिवातिरञ्जनकरं काश्मीरपङ्कद्रवम्।**
**गृह्णीते शठतामिवानुपहतां जातीप्रसूनस्त्रजं**
**तत्रैवाहनि वारवामनयना विज्ञाय कान्तागमम्।।**

सङ्केतस्थाने प्रियानागमनहेतुचिन्ताव्याकुला **विरहोत्कण्ठिता।** अत्र तदनागमजन्यदुःखवत्त्वं लक्षणं तद्धेतुचिन्तादिकं तु चेष्टितमिति विवेकः। तदुक्तम्—

**'अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः।**
**तस्यानागमदुःखार्त्ता विरहोत्कण्ठिता मता'।।**

विरहस्तु समानदेशस्थत्वे सति सम्भोगाभावः। सत्यन्तं प्रवासेऽतिव्याप्ति-वारणार्थम्। न च सोऽपि लक्ष्य एवेति वाच्यम्। प्रोषितभर्तृकाया विरहोत्कण्ठितायाश्च भिन्नत्वेन मुनिना परिगणितत्वात्।

**मुग्धा विरहोत्कण्ठिता यथा मम—**

**अबिभ्रत्यासत्तिं हृदयदयिते नूतनवधू-**
**रतः स्यादन्यस्यामिति परिकलय्य प्रतिपदम्।**
**न धत्ते निःश्वासं न च वहति वाष्पं नयनयो-**
**र्विधोर्बिम्बं वैभातिकमिव मुखं किन्तु बिभृते।।**

मध्या यथा—

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृ-
द्यो मां नेच्छति नागतश्च सहसा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बालाऽऽवृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि।।

प्रगल्भा यथा मम—

कामिन्याः सति बाधकस्य विरहे यावाननेहा प्रिय-
प्रत्यासत्तिधिया प्रतीक्षितुमभूदर्हो गते तावति।
अम्लायञ्छ्वसितैः स्रजः सुमनसां धारा दृशोरम्भसां
प्रामार्जन् घुसृणं कपोलतलतश्चुक्षोभ वक्षोरुहः।।

परकीया यथा—

एहिसितुमंति णिमिसम्ब जग्गिअ जामिणीअ पढमद्धम्।
सेसं सन्तावपरव्वसाइ वरिसंव चोल्लीणम्[१]।।

सामान्या यथा मम—

नोपयातः किमिति स भवेदित्थमालोचयन्ती
रूपाजीवा वदनमरुतं सन्दधे चात्यजच्च।
अर्थस्योपस्थितिमथ सखीभाषिताद्वल्लभाच्च
प्रत्यादिक्षन्मुखमनुशयं मानसे च न्यधत्त।।

स्वसन्निधानत्यागेच्छाविरहविशिष्टवल्लभा **स्वाधीनभर्तृका**। स्वपदं नायिका-परम्। तदुक्तम्—

'सुरतातिशयैर्बद्धो यस्याः पार्श्वगतः प्रियः।
सामोदगुणसम्पन्ना भवेत्स्वाधीनभर्तृका।।
विचित्रोज्ज्वलनेत्रान्तः प्रमोदोद्योतितानना।
उदीर्णशोभातिशया कार्य्या स्वाधीनभर्तृका।।'

मुग्धा स्वाधीनभर्तृका यथा—

'श्यामा विलोचनहरी बालेयं मनसि सज्जन्ती।
लुम्पति पूर्वकलत्रं धूमलता भित्तिचित्रमिव।।'

---

१. एष्यसि त्वमिति निमिषमिव जागरितं यामिन्याः प्रथमार्धम्।
शेषं सन्तापपरवशया वर्षमिव चोत्रतिम्।।इति च्छाया।

मध्या यथा—

पुंसां दर्शय सुन्दरि! मुखेन्दुमीषत्त्रपामपाकृत्य।
जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु।।

प्रगल्भा यथा—

अण्णमहिलाप्पसङ्गं हे देव्व करेसु अह्मदइअस्स।
पुरिसा एकंतरसा णहु दोसगुणेवि आणन्ति[1]।।

परकीया यथा—

अस्तु म्लानिर्लोको लाञ्छनमपदिशतु हीयतामोजः।
तदपि न मुञ्चति स त्वां वसुधाच्छायामिव सुधांशुः।।

सामान्या यथा—

कृत्रिमकनकेनेव प्रेम्णा मुषितस्य वारवनिताभिः।
लघुरिव वित्तविनाशक्लेशो जनहास्यता महती।।

प्रियानुनयानभ्युपगमजनितदुःखवती **कलहान्तरिता**। तदुक्तम्—

ईर्ष्याकलहसन्तप्तो यस्या नागच्छति प्रियः।
सामर्षवशसन्तप्ता कलहान्तरिता भवेत्।।

अमर्षोऽत्र प्रियानुनयप्रत्याख्यानजन्यः स्वविषयको ग्राह्यः।

मुग्धा कलहान्तरिता यथा मम—

प्रत्यादिश्य रुषां वशादनुनयं भर्तुर्मरुत्यावह-
त्यामोदस्पृशि सिन्दुवारसुमनःसन्दोहदोलायितैः।
मुग्धाक्ष्यानुशयानयापि नवया न त्वन्यदातन्यते
श्वासेनागमि पद्मरागदलवन्मालिन्यमेवाधरः।।

मध्या यथा मम—

आदर्शं समयेन दर्शितवति प्रातर्वयस्याजने
बह्वायस्यति यास्यतो विशदतां श्वासस्य रोधाय सा।
प्राणेशस्य तथा गिरामनुररीकारान्निधत्ते परं
हेलामन्थरतारकाः प्रतिफलत्यात्मन्यजस्रं दृशः।।

---

१. अन्यमहिलाप्रसङ्गं हे दैव कुरु अस्मद्दयितस्य।
पुरुषा एकान्तरसा न खलु दोषगुणौ विजानन्ति।।इति च्छाया।

**प्रगल्भा यथा मम—**

**पचेलिमरसोदयं विदुषिचेलि! मिथ्याग्रहा-**
**द्वहेलितवती तथा मदनहेलितप्तं प्रियम्।**
**चलेऽलिकगतालका स्वकरकेलिपाथोरुह-**
**प्रमेलितमुखी मृषा क्षितिमये! लिखस्युन्मनाः।।**

**परकीया यथा मम—**

**शीलं साधु मिमील यत्प्रणयतो लज्जा ममज्जाखिला**
**मर्यादाप विपर्ययं बहुमतो दुर्वारगुर्वादरः।**
**आसीच्चापलमेव नापलपितं सोऽनुग्रहार्थं नम-**
**न्नापातप्रतिभासया बत मया पापेन नापेक्षितः।।**

**सामान्या यथा मम—**

**साकूतं करवाणि पाणिकमले माणिक्यजं कङ्कणं**
**मानं स्त्रंसय हंसकं पदयुगे संसज्जयानि स्वयम्।**
**वक्षोजे निदधानि दाम जनितं षाण्मासिकैर्मौक्तिकै-**
**रेवं सोऽनुनयन्मया हतधिया केलिं विना हेलितः।।**

अन्यसम्भोगचिह्नविशिष्टनायकदर्शनजन्यदुःखवती **खण्डिता**। तदुक्तम्—

**'व्यासङ्गादुचिते यस्या वासके नागतः प्रियः।**
**तदनागमनार्ता तु खण्डितेत्यभिसंज्ञिता'।।**

व्यासङ्गो नायिकान्तरसम्भोगप्रसक्तिः। तत्पदम् अन्यसम्भोगाभावविशिष्ट-नायकपरम्। तस्यानागमनम् = अन्यसम्भोगचिह्नाभावविशिष्टप्रियागमनाभावः। स च सम्भोगचिह्नाभावरूपं यद्विशेषणं तदभावप्रयुक्त एव ग्राह्यः। आगमनस्यापि स्वरूपतो दुःखजनकत्वानुपपत्त्या आगमनदर्शनजन्येत्युक्तौ चागमनपदवैयर्थ्यात् सम्भोगचिह्न-विशिष्टप्रियदर्शनजन्यदुःखवत्त्वं लक्षणं पर्यवसन्नम्। यथाश्रुतमुनिवचनव्याख्याने विरहोत्कण्ठितायामतिव्याप्तिरिति रहस्यम्।

स्यादेतत्। पराङ्गनासङ्गजन्यमानवत्याः खण्डितायाश्च कथं भेद इति चेत्, अत्र केचित्—हेतुदर्शनकाले खण्डिता तज्जन्यसम्भोगानुमितिकाले मानवतीत्याहुः। तन्न। तत्रापि सम्भोगानुमित्यैव ईर्ष्योत्पत्तेः। तस्मान्मानवती न भेदान्तरम्। षोडशानां प्रेमगर्विता सौन्दर्यगर्विता मानवतीति त्रैविध्यस्याभियुक्तैरनुक्तत्वात्; किन्तु उक्तभेदाष्टकस्यैवोदाहृतत्वात्।

मुग्धा खण्डिता यथा मम—

वीक्ष्य प्रियस्य रदनच्छदमन्यनारी-
विश्राणितं रदपदं दधतं विदूरात्।
सन्तप्तमीक्षणयुगं करकाधियेव
नासाग्रमौक्तिकमधि न्यपतत्प्रियायाः।।

मध्या यथा मम—

नेतुर्नखक्षतमुदीक्ष्य कपोलभूमौ
किं नाम कुञ्चयसि सुभ्रु! दृगञ्चलं त्वम्।
तत्तावकीनवदनाम्बुरुहस्थमेव
वैशद्यतः प्रतिफलत्प्रतिभाति तत्र।।

प्रगल्भा यथा—

संवाहणसुहरसतोसिएण देतेण तुह करे लक्खम्।
चरणेन विक्कमाइव्वचरिअमणुवट्टिअं तिस्सा[1]।।

परकीया यथा मम—

पश्यन्त्या सहजारुणं प्रणयिनो बिम्बाधरं सुभ्रुवा
प्रत्यूषेऽभिमुखस्य कज्जलतमोलेखाकलङ्काकुलम्।
वैमुख्यं सहसैव हन्त विहितं सावेगमुत्कम्पितं
प्रादुर्भावसमानकालिकतिरोभावं तु वाष्पं कृतम्।।

सामान्या यथा मम—

प्रातः प्रवालमणिना मणिमालया च
वीक्ष्य प्रसाधिततनुं तमुपेयिवांसम्।
तस्यापरावयववर्तिभिरर्द्धचन्द्रै-
र्वाराङ्गनाहृदयगा व्यगमंस्तदाशाः।।

---

१. संवाहनरसतोषितेन ददता तव करे लाक्षाम् (लक्षम्)।
चरणेन विक्रमादित्यचरितमनुवर्तितं तस्याः।।इति च्छाया।
अत्र लक्खमिति पदं श्लेषेण लाक्षां सङ्ख्याविशेषं च प्रतिपादयति।

दत्तसङ्केतप्रियानवाप्तिजन्यदु:खवती **विप्रलब्धा**। तदुक्तम्—

**यस्या दूतीं प्रियः प्रेष्य दत्त्वा सङ्केतमेव वा।**
**नागतः कारणेनेह विप्रलब्धा तु सा स्मृता।।**

**मुग्धा विप्रलब्धा यथा मम—**

**वयस्याभिर्नीता कथमपि निकुञ्जं नववधू-**
**रनायाते तस्मिन्नयनविषयत्वं प्रियतमे।**
**दधाने राजीवभ्रममनुसरत्यास्यमलिना**
**कलापे निःशङ्कं दिशति विकृतामालिषु दृशम्।।**

**मध्या यथा मम—**

**सङ्केतगोचरमुपेत्य विलोचनस्य**
**सीमासु वल्लभतमं न निभालयन्ती।**
**श्वासं श्रमाभिनयनेन विजृम्भमाण-**
**व्याजेन वाष्पविसरं विदधाति बाला।।**

**प्रगल्भा यथा मम—**

**वानीरवने वल्लभविरहिणि पाणौ कपोलमुपधाय।**
**तद्वृत्तीन् पुलकानिव वामभ्रूरश्रुबिन्दुभिरमार्क्षीत्।।**

**परकीया यथा—**

**आअण्णअइ अडअणा णिउंजहेठ्ठम्मि दिण्णसङ्केआ।**
**अग्गपअपेल्लिआणं मम्मरअं जुण्णपत्ताणम्[१]।।**

**सामान्या यथा मम—**

**दीर्घत्वमागतवतो बहुजीवनस्य**
**मूलायितानविरतं हृदि धार्यमाणान्।**
**अप्रेक्ष्य वारयुवती दयितं निकुञ्जे**
**श्वासानिव व्यरहयद्द्रविणाभिलाषान्।।**

प्रियप्रवासज्ञानजन्यदु:खवती **प्रोषितभर्तृका**। तदुक्तम्—

**'गुरुकार्यान्तरवशाद्यस्यास्तु प्रोषितः प्रियः।**
**सा रुक्षालककेशान्ता भवेत्प्रोषितभर्तृका'।।**

---

१. आकर्णयति स्वैरिणी निकुञ्जमध्ये दत्तसङ्केता।
अग्रपदप्रेरितानां मर्मरकं जीर्णपत्राणाम्।।इति च्छाया।

प्रोषितेति क्तप्रत्ययार्थो भूतत्वमतन्त्रम्। प्रवासस्य स्वरूपतो दु:खानुपपादकत्वात्। प्रवासज्ञानस्यैव तथात्वात्। भूतभविष्यत्प्रवासज्ञानस्यापि तदुपपत्तेः। तदुक्तं **काव्यप्रदीपे**—'वर्तमानवत्स्यर्न्तावपि स्वज्ञानद्वारा विप्रलम्भप्रयोजकाविति नाव्याप्तिः। प्रवासपदेन तज्ज्ञानलक्षणाद्वा' इति। अन्यथा प्रवसत्पतिका प्रवत्स्यत्पतिकयोर्भेदान्तरत्वापत्तेः। न चेष्टापत्तिर्मुनिवचनविरोधात्।

**मुग्धा प्रोषितभर्तृका यथा—**

**हत्थेसुअ पाएसु अ अंगुलिगणणाहि उअगआ दिअहा।**
**एह्णिंउण केण गणिज्जउत्ति भणिउं रुअइ मुद्धा[1]।।**

**मध्या यथा मम—**

**विश्लेषतस्तव परिश्लथमम्बुजाक्ष्या**
**वक्षो विभिद्य विविशुर्मलयानिलाः किम्।**
**यस्मात्तदव्यवहितोत्तरकालमेव**
**प्रादुर्भवन्ति नवनिःश्वसितप्रवाहाः।।**

**प्रगल्भा यथा—**

**भवद्भवनमागतं भ्रमितमीक्षिता नैव सा**
**कलामयकलावती कुतुकमेतदालोकितम्।**
**विधुर्वलति पल्लवे तडिदलिन्दमालम्बते**
**पतत्यचलयोस्तले कमलयोश्च मुक्तावलिः।।**

**परकीया यथा मम—**

**आयातेऽपि महोत्सवे रतिपतेः पत्यौ मुखप्रेक्षकेऽ-**
**प्यावेशात्प्रतिवेशिनीषु विहितोत्साहासु भूषाविधौ।**
**आलीभिर्विहितो बलादपि परिष्कारः कुरङ्गीदृशो**
**दूरस्थे दयितेऽनुकल्पविधिमत्काम्यप्रयोगायते।।**

**सामान्या यथा मम—**

**अन्येन प्रहितं विटेन सरसं रायोऽतिबंहीयसो**
**दानस्याभ्युपपत्तिगर्भितमियं लेखं दृशोः कुर्वती।**
**दूरस्थप्रथमप्रियान्तिकमुपायातुं जनस्येच्छतो**
**वाष्पैराविलितं व्यनक्ति वदनं वेश्या गवाक्षाद्बहिः।।**

---

१. हस्तेषु च पादेषु च अङ्गुलिगणनाभिरुपगता दिवसाः।
इदानीं पुनः केन गण्यतामिति भणित्वा रोदिति मुग्धा।।इति च्छाया।

प्रियसमीपगमनोद्यमवती **अभिसारिका**। तदुक्तम्—

**हित्वा लज्जां समाकृष्य मदेन मदनेन वा।**
**अभिसारयते कान्तं सा भवेदभिसारिका।।**

णिजर्थोऽत्र न विवक्षितः। 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' **इत्यमरोक्तेः**। तद्व्याख्यायां यथोक्तवाक्यस्यैव **क्षीरस्वामिनोपन्यासाच्च**।

**'वेश्यायाः कुलटाया वा प्रेष्याया वा प्रयोक्तृभिः।**
**एभिर्भावविशेषैस्तु कर्त्तव्यमभिसारणम्।।**

**समदा मृदुचेष्टा च तथा परिजनान्विता।**
**नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गनाशतैः।।**

**संलीना स्वेषु गात्रेषु लज्जासन्नमितानना।**
**अवगुण्ठनसंवीता गच्छेत्तु कुलजाङ्गना।।**

**मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना।**
**आविद्धगतिसञ्चारा गच्छेत्प्रेष्याङ्गना तथा'।।**

इति **भरतेनोक्तत्वात्**।

**'कान्ताभिसरणोद्युक्ता स्मरार्त्ता साभिसारिका'।**

इति **विद्यानाथोक्तेश्च**।

**'या वल्लभागमनकालमपारयन्ती**
**सोढुं स्मरज्वरभरार्त्तिपिपासितेव।**
**निर्याति वल्लभजनाधरपानलोभात्**
**सा कथ्यते कविवरैरभिसारिकेति'।।**

इति **भोजराजोक्तेश्च**।

न च स्वीयाया अभिसारानुपपत्तिः, सपत्न्यादिभयादुपपत्तेः।

**मुग्धाभिसारिका यथा मम—**

**विधाय वरवर्णिनीमभिनवां कथञ्चित्सखी-**
**जनैः सह कृतः कृतप्रियतमाभिसारोत्सवाम्।**
**ह्रिया हृदि तिरस्कृतः स्पृशति तत्प्रतीपायित-**
**श्रमापनयनेच्छया बहिरिव प्रसूनाशुगः।।**

मध्या यथा—

उपविश मृदुतल्पे कल्पिते पल्लवौघै-
र्विरचय कचभारं स्रस्तमंसस्थलीषु।
इह हि मलयजन्मा मारुतो मन्दमन्दं
पिबतु तव कपोलालम्बिनः स्वेदबिन्दून्।।

प्रगल्भा यथा मम—

बन्धभ्रंशस्खलदलकभूनिर्गलद्वारिबिन्दु-
व्याजाल्लाजाञ्जलिमिव तडित्पातवह्नौ क्षिपन्ती।
वक्त्रं भर्त्तुर्ध्रुवमनिमिषं प्रेक्षमाणा मृगाक्षी
कुञ्जस्यान्तर्लसति पुनरारब्धपाणिग्रहेव।।

परकीया यथा मम—

एता जाग्रति यातरोऽत्यवहितास्त्वत्पादरोपादरा
मिथ्यैव स्वपिति प्रतीपमहिला दीपः पुरो दीप्यते।
हृद्वृत्त्या कृतमित्वरि! त्वरितया किञ्चित्प्रमाद्यत्वरि-
व्रातः कातरता मृषा तरलता किं वा तदातन्यते[1]।।

सामान्या यथा मम—

अपद्मा श्रीरेषा प्रतिहतमनङ्गस्य ललितं
कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम्।
सलीलं गच्छन्ती रतिसमयलज्जाप्रणयिनी
रतिक्षेत्रैरङ्गैः प्रियपथिकसार्थैरनुगता।।

अन्धकाराभिसारिका यथा—

'गन्तुं यदि व्यवसितासि घनान्धकारे
नीलाञ्चलेन तनुमावृणु मुग्धशीले!।
विद्युल्लता यदि पथि प्रतिरोधिनी स्या-
दप्रावृतैव कनकद्रवगौरि! गच्छेः।।

ज्योत्स्नाभिसारिका यथा मम—

अवदातवेषवत्यां वरवर्णिन्यामभिसरन्त्याम्।
समजनि निशीथसमयेऽप्यौषसिकीवाखिला ज्योत्स्ना।।

**दिवाभिसारिका यथा—**

**सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं**
**यातोऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमत्रागतिः।**
**आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना**
**नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम्।।**

एताः सर्वा अप्युत्तममध्यमाधमभेदेन त्रिधा। तदुक्तं भरतेन—

**सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता।**
**उत्तमा मध्यमा चैव तृतीया चाधमा स्मृता।।**

**उत्तमा यथा—**

**या विप्रियेऽपि तिष्ठन्तं न वदत्यप्रियं प्रियम्।**
**न चिरं कोपमायाति दोषान्प्रच्छादयत्यपि।।**इत्यादि।

यथा मम—

**प्रियान्यव्यावृत्तिः परिजनभयं स्वस्य विभुता**
**गुणा भासन्तेऽमी सखि! यदपि माने बहुविधाः।**
**तथापि प्रारब्धप्रणयपरिपाटीषु विषया-**
**न्तराणां सञ्चारोऽनुपममपकर्षं ध्वनयति।।**

**मध्यमा यथा—**

**ईर्ष्यातुरा वा निभृता क्षणक्रोधा च गर्विता।**
**क्षणप्रसादना चैव सा नारी मध्यमा स्मृता।।**

यथा—

**दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रवद्**
**न्यग्भूतं बहिरासितं पुलकवत्संस्पर्शमातन्वति।**
**नीवीबन्धवदासितं श्लथतया सम्भाषमाणे ततो**
**मानेनापसृतं ह्रियेव सुतनोः पादस्पृशि प्रेयसि।।**

**अधमा यथा—**

**अस्थानपरुषा या तु दुःशीला चातिमानिनी।**
**परुषा प्रतिकूला च दीर्घरोषाधमा स्मृता।।**

इयमेव चण्डीत्युच्यते। यथा मम—

**अनुनयति प्रेयसि यन्मानातिशयस्त्वया कृतश्चण्डि!।**
**इदमेव शान्तिकर्मणि वेतालाभ्युदयमनुहरति।।**

स्त्रीत्वे सति अनुकूला **सखी**। अनुकूलत्वं स्वनिष्ठप्रणयनायिकानिष्ठ-प्रणयविषयत्वम्। तस्याः कर्म मण्डनोपालम्भशिक्षापरिहासादि।

**मण्डनं यथा—**

**प्रभाते पृच्छन्तीरवरहसवृत्तं सहचरी-**
**र्नवोढा न व्रीडामुकुलितमुखीयं सुखयति।**
**लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-**
**श्चमत्कारं गूढं करजपदमासां कथयति।।**

**उपालम्भो यथा—**

**सा सर्वतोऽनुरक्ता रागं गुञ्जेव न तु मुखे वहति।**
**वचनपटोस्तव रागः केवलमास्ये शुकस्येव।।**

**शिक्षा यथा मम—**

**मुग्धे! कृत्रिमतद्व्यतिक्रमशतोपन्यासवैज्ञानिकै-**
**र्वाग्गुम्फान्परिकल्पितान् श्रवणयोस्त्वं माध्वनीनान् कृथाः।**
**एते प्रेमभराभिचारमनवो विश्रम्भविस्रंसनाः**
**स्वोत्कर्षच्छिदुरा विपक्षरमणीसौभाग्यजन्माङ्कुराः।।**

**परिहासो यथा—**

**स्मरशास्त्रमधीयाना शिक्षितासि मयैव यम्।**
**अगोपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया।।**

**प्रसङ्गात्प्रियपरिहासो यथा—**

**नक्तं रत्नमयूखपाटलमिलत्काकोलकोलाहल-**
**त्रस्यत्कौशिकमुक्तकन्दरतमाः सोऽयं गिरिः स्मर्यते।**
**यत्राकृष्टकुचांशुके मयि रुषा वस्त्राणि पत्राणि ते**
**चिन्वत्या वनदेवतास्तरुलतामुच्चैर्व्यधुः कौतुकात्।।**

**प्रियापरिहासो यथा—**

**कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं**
**केकामेकां कुरु पशुपतिर्नैव दृष्टे विषाणे।**
**स्थाणुर्मुग्धे! न वदति तरुर्जीवितेशः शिवाया**
**गच्छाटव्यामिति हतवचाः पातु वः शूलपाणिः।।**

सङ्गमादिकुशला दूती। तथा च **भरतेनोक्तम्—**

**प्रातिवेश्या सखी दासी कुमारी कारुशिल्पिनी।**
**धात्री पाखण्डिका चैव दूत्यः स्त्रीक्षणिका तथा।।**

कारुपदं रजक्यादिपरम्। शिल्पिनी चित्रकारस्त्री। तथा—

**तया प्रोत्साहनं कार्यमनुरागानुकीर्तनम्।**
**कुलभोगधनाधिक्यं कार्यं चैवाविकत्थनम्।।** इत्यादि।

**सङ्गमनं यथा—**

**पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता**
**तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव।**
**युवा सोऽयं प्रेयानिह सुवदने! मुञ्च जडतां**
**विधातुर्वैदग्ध्यं फलतु च सकामोऽस्तु मदनः।।**

**विरहनिवेदनं यथा—**

**आलिङ्गनानि वचनामृतसेचनानि**
**वामाशयेन विधिनैव निवारितानि।**
**आलोकनेऽपि यदि गोकुलनाथ! बाधा**
**राधा कथं हृदयसौष्ठवमादधातु।।**

**कुलभोगाद्याधिक्यकथनं यथा—**

**मन्दाकिनीनन्दनयोर्विहारे देवे वरे देवरि माधवे च।**
**श्रेयः श्रियां यातरि यच्च सत्यां तच्चेतसा भामिनि! भावयस्व।।**

**।। इति नायिकानिरूपणं समाप्तम्।।**

नायिकानिष्ठरतौ विषयत्वान्नायकनिष्ठरतावाश्रयत्वाच्च नायकोऽपि निरूप्यते। स त्रिविधः, पत्युपपति-वैशिकभेदात्। विवाहजन्यसंस्कारवान् **पतिः**। न च स्वीयायामतिव्याप्तिः, पुंस्त्वे सतीत्यभिधेयत्वात्। यथा—

**इयं वनी घनीभूतकुशाङ्कुरकरम्बिता।**
**शिथिलं धेहि वैदेहि! मदर्पितपदे पदम्।।**

तद्भिन्नत्वे सत्यनुरागविषय **उपपतिः**। यथा—

**प्राङ्गणकोणेऽपि निशापतिः सन्तापं सुधामयो हरति।**
**यदि मां रजनिज्वर इव सखि! स न निरुणद्धि गेहपतिः।।**

वेश्योपभोगरसिको **वैशिकः**। यथा—

**णन्देउ सुरअसतिह्लापराहाइं सअललोअस्स।**
**बहुकइअवमग्गविणिम्मिआईं वेस्साण पेम्माइं[१]।।**

यत्तु—

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमं चतुर्भेदः।।**

इत्यन्यत्रोक्तम्, तदिह प्रकृतानुपयोगान्नोपन्यस्तम्। पतिश्चतुर्द्धा, अनुकूल-दक्षिण-धृष्ट-शठभेदात्। तन्मात्रविषयकानुरागवाननुकूलः। यथा—

**इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-**
**रहस्यस्याः स्पर्शो वपुषि बहलश्चन्दनरसः।**
**अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः**
**किमस्या न प्रेयो यदि परमसह्यस्तु विरहः।।**

अनेकविषयकतुल्यानुरागवान् दक्षिणः। यथा—

**स्नाता तिष्ठति कोशलाधिपसुता वारोऽङ्गराजस्वसु-**
**र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।**
**इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते**
**देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः।।**

स्वतिरस्कारयुक्तलज्जाशून्यत्वे सत्यनुरक्तो धृष्टः। यथा—

**केदाव किआ अहवा करोसि काएसि सुहअ एदाहिं।**
**अवराहा णअ लज्जिअसाहसुत्तआ खमिज्जन्तु[२]।।**

---

१. नन्देयुः सुरतसतृष्णापराधानि सकललोकस्य।
बहुकैतवमार्गविनिर्मितानि वेश्यानां प्रेमाणि।।इति च्छाया।

२. के तावत्कृता अथवा करोषि कार्यसे सुभग! एताभिः।
अपराधा न च लज्जितसाहसोत्तराः क्षम्यन्ताम्।।इति च्छाया।

रतिकपटशील: शठ:। यथा—

कान्ते सागसि शायिते प्रियसखीवेषं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्सङ्गमाकाङ्क्षया।
मुग्धे! दुष्करमेतदित्यतितरामुन्मुक्तहासं बला-
दालिङ्ग्य च्छलितास्मि तेन कितवेनाद्य प्रदोषागमे।।

एते भेदा उपपतेरपि बोध्या:। चतुरादिभेदा अपि मुनिनोक्ता:।

पुनरेव तु पुरुषगुणान् कामिततन्त्रे प्रवक्ष्यामि।
चतुरोत्तमौ च मध्यस्तथाधमः सम्प्रवृत्तकश्चैव।।

स्त्रीणां प्रयोगविषये ज्ञेयाः पुरुषास्त्विमे पञ्च।
दुःखक्लेशसहिष्णुः प्रियवाग्दाता प्रसादने कुशलः।।

रत्युपचारनिपुणो दक्षश्चतुरस्त्वसौ बोध्यः।
यो विप्रियं न कुरुते धीरोदात्तः प्रियंवदो मानी।।

अज्ञातहृदयतत्त्वः स्मृतिमात्रज्ञेयः स तु ज्येष्ठः।
सर्वार्थं मध्यस्थो भावग्रहणं करोति नारीणाम्।।

किञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः पुरुषः।
काले दाता ह्यपमानितोऽपि न क्रोधमतितरामेति।।

दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि।
अपमानितोऽपि नार्या निर्लज्जं समुपसर्पति तथैव।।
अन्यनरे सङ्क्रान्तामारूढस्नेहभावनया।
अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः।।
सुहृदापि वार्यमाणो विज्ञेयः सोऽधमो नाम।
अविगणितभयामर्षो मूर्खः सततं प्रसक्तहासश्च।।

एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु।
रतिकलहसम्प्रहारे सुकर्कशः क्रीडनीयकः स्त्रीणाम्।
एवंविधो विधिज्ञैः प्रवृत्तको नाम विज्ञेयः।।

इहाद्यन्तयोर्द्वितीयचतुर्थान्तर्भावादुत्तममध्यमाधमेति त्रैविध्यमेव पुरस्कृतमभियुक्तैः।

**उत्तमो यथा—**

तच्छ्रमस्तमदिदीक्षत क्षणं तालवृन्तचलनाय नायकम्।
तद्विधा हि भवदैवतं प्रिया वेधसोऽपि विदधाति चापलम्।।

**मध्यमो यथा—**

लज्जाविदा सीलंअ खण्डिअं असईघोसणा दिण्णा।
जस्स कए णं सहअरि! सजेव्व जणो अजणो जाओ[1]।।

**अधमो यथा—**

चतुरिमकलाकण्ठच्छेदो मनोभववञ्चनं
दृषदि मधुनो लिप्सा लोके विडम्बनमात्मनः।
उपरि परितः सङ्कल्पानां शिलाशतपातनं
सहचरि! परीतापस्थानं जडे हृदयार्पणम्।।

मानिनो मध्यमे चतुरस्य च उत्तमेऽन्तर्भावः।

**मानी यथा—**

विरहविषमः कामो वामस्तनुं कुरुते तनुं
दिवसगणनादक्षः सोऽयं व्यपेतघृणो यमः।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयतनुर्जीवत्येवं कथं प्रमदाजनः।।

चतुरो द्विधा—वचनव्यङ्ग्यसमागमश्चेष्टाव्यङ्ग्यसमागमश्चेति।

**आद्यो यथा—**

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।
किं चैतस्मिन् सुरतसुहृदस्तन्वि! ते वान्ति वाता
एषामग्रे सरति कलिताकाण्डकोपो मनोभूः।।

---

१. लज्जापिता शीलं च खण्डितमसती घोषणा दत्ता।
यस्य कृते ननु सहचरि! स एव जनोऽजनो जातः।।इति च्छाया।

**द्वितीयो यथा मम—**

**अवाप्यावस्थानं कथमपि मृगीचक्षुषि पुरो**
**गुरूणां दृग्भङ्ग्या मिलनसमयं जातु मनसि।**
**अपह्नुत्य प्रेयान्किल किमपि सामाजिकजनान्**
**दृगम्भोजद्वन्द्वं परिमुकुलयन्नुत्तरितवान्।।**

यथा वा—

**आघ्रातं कमलं प्रियेण सुदृशा स्मृत्वापनीतं मुखं**
**दत्तं विद्रुमकन्दुके नखपदं सीत्कृत्य गूढौ स्तनौ।**
**दत्ता चम्पकमालिकोरसि तया प्रोद्भिन्नरोमाञ्चया**
**मीलल्लोचनमासितं चतुरयोर्दूरेऽपि पूर्णो रसः।।**

अनभिज्ञस्तु नायको नायकाभासः। यथा मम—

**साकूतं ग्रथिता दृशोः पथि यथाशोभं दृशोर्भङ्ग्यो**
**मन्दं कन्दलितं रदच्छदनयोरानन्दनं स्पन्दनम्।**
**निन्याते कुचकोरकौ विशदतां विन्यासवैचित्र्यतो**
**वैचित्र्यं न तथापि चेत्तदितरा रीतिर्वरीवर्त्ति किम्।।**

स्यादेतत्। अवस्थाभेदादपि नायकभेदोऽस्त्विति चेत्, न, स्वभावादेव तद्भेदाङ्गीकारात्। प्रोषितप्रियाकत्वादेरनौचित्यसञ्जनकत्वात्। अत एव प्रोषितत्वं नायकभेदप्रयोजकतया अङ्गीकृतम्। तस्य नायिकाभेदत्वेनागणितत्वात्।

**प्रोषितपतिर्यथा—**

**रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा**
**पान्थेनाथ वियोगदुःखपिशुनं गीतं तथोत्कण्ठया।**
**आस्तां जीवितहारिणः प्रवसनालापस्य सङ्कीर्त्तनं**
**मानस्यापि जलाञ्जलिः सरभसं लोके न दत्तो यथा।।**

**उपपतिर्यथा मम—**

**अप्रादुर्भवदस्रवारि कुचयोरीषत्परिस्पन्दन-**
**प्रत्येयप्रकृतातिरिक्तनियतश्वासावसीदद्गलम्।**
**लोकत्रासनियन्तृतान्तरपरावृत्तस्खलत्तारकं**
**दृग्भङ्गं सुतनोः प्रतस्थुषि मयि ध्यायामि नायामिनम्।।**

यथा वा—

**तीर्णा वाष्पपरम्परैव सरितां पूरेषु कः सम्भ्रमः**
**सोढा कातरदृष्टिरेव कियती वज्राभिघातव्यथा।**
**श्वासा एव नतभ्रुवो न गणिताः के नाम झंझानिलाः**
**प्रेमैवायमपेक्षितो ननु सखे! प्राणेषु को नो ग्रहः।।**

**वैशिको यथा मम—**

**असङ्कुचितलोचनाञ्चलमनन्तरायीकृत-**
**स्तनावरणनीविकानिरसनप्रयत्नोदयम्।**
**तरङ्गितमनङ्गभूविविधभङ्गिविच्छित्तिभिः**
**स्मृतं सदपि रञ्जयज्जयति वारनारीरतम्।।**

एषां सहायश्चतुर्द्धा। पीठमर्द-विट-चेटक-विदूषकभेदात्। तथा च **विद्यानाथः —**

**किञ्चिदूनः पीठमर्द एकविद्यो विटः स्मृतः।**
**सन्धाननिपुणश्चेटो हास्यप्रायो विदूषकः।।**

केचित्तु पीठमर्द्दस्यान्यत्रोपयोगो न शृङ्गारे। तदुक्तं **दर्पणे—**

**दूरानुवर्त्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु।**
**किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः।।**

(प.३, का.३९)

यथा रामादीनां सुग्रीवादयः।

**शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।**
**भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः।।**

(प.३, का.४०)

आदिपदान्मालाकाररजकताम्बूलिकगान्धिकादयः।

**सम्भोगहीनसम्पद्विटस्तु धूर्त्तः कलैकदेशज्ञः।**
**वेशोपचारकुशलो वाग्ग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्।।**

(प.३, का.४१)

चेटः प्रसिद्धः।

**कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः।**
**हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः।।**इति।(प.३, का.४२)

अन्ये तु पीठमर्दः स्वकल्पितवाग्भिः स्त्रियं समाधत्ते, विटस्तु **कामशास्त्रो**पाये-नेत्याहुः। एतेषां नायकानुकूलाचरणं व्यापारः। व्यापारो यथा **श्रीरुद्रचन्द्र-देवानाम्**—

**मानं त्यक्ष्यसि कान्तमेष्यसि पुनः सम्भावयिष्यस्यलं**
**भूषाः, पास्यसि वारुणीं रतिकलाकेलिं समारोक्ष्यसि।**
**किञ्च त्वां विनिवेदयामि सरले! मन्दानिलोल्लासिता**
**प्रालेयांशुकृतोदया मधुनिशा हस्तं गता हार्य्यते।।**

**विटो यथा**—

**तरुणजनसहायश्चिन्त्यतां वेशवासो**
**विगणय गणिकात्वं मार्गजाता लतेव।**
**वहसि हि धनहार्य्यं पण्यभूतं शरीरं**
**सममुपचर भद्रे! सुप्रियं वाऽप्रियं वा।।**

अयं च सामान्यवनितायामपि सहायः। यथा—

भवति वसन्तसेने!

**साटोपकूटकपटानृतजन्मभूमेः शाठ्यात्मकस्य रतिकेलिकृतालयस्य।**
**वेश्यापणस्य सुरतोत्सवसङ्ग्रहस्य दाक्षिण्यपुण्यसुखनिष्क्रयसिद्धिरस्तु।।**

**चेटो यथा**—

**दूईकज्जाअण्णपडिरोहं मा करेउ अअमत्ति।**
**उत्तंभे इव तुरिअं तिस्सा कण्णुप्पलं पुलहो**[१] **।।**

**विदूषको यथा मम**—

**परिशिथिलय ग्रन्थींस्तावत् क्रुधो हृदयस्थिता-**
**निति विनयवत्याचक्षाणे तदा दयितां मयि।**
**लघु परिमृषन्नात्मीयस्योपवीतगुणस्य तान्**
**विहसितमुखीं तामाधत्त क्षणेन विदूषकः।।**

**।। इति नायकनिरूपणम्।।**

---

१. दूतीकार्याकर्णनप्रतिरोधं मा करोत्वयमिति।
उत्तम्भयतीव त्वरितं तस्याः कर्णोत्पलं पुलकः।।इति च्छाया।

ननु कोऽयं रसो नाम? यदालम्बनमेतन्निरूपितमिति। तदुच्यते—अर्थोपस्थितिहेतुः पदस्य पदार्थेन सह सम्बन्धो वृत्तिः। सा त्रिविधा—शक्तिर्लक्षणा व्यञ्जना च। तत्रास्मात्पदादयमर्थो बोध्य इत्याकारकेच्छात्मकः सङ्केतः शक्तिः। स च गवादिपदे ईश्वरीयः। आधुनिकचैत्रादिपदे तत्तत्पुरुषीय इति नैयायिकाः। पदार्थान्तरं शक्तिरिति मीमांसकाः। शक्त्याः प्रतिपादकः शब्दः शक्त इत्युच्यते। स त्रिविधः—रूढो यौगिको योगरूढश्च। रूढो यथा—गवादावर्थे गौरित्यादिः। गमेर्डोरित्यौणादिकप्रत्ययस्य शक्त्यनङ्गीकारात्। अवयवार्थस्य तत्रानवबोधात्। यौगिको यथा—दण्डी पाचक इत्यादिः। प्रकृतिप्रत्ययार्थमर्यादया दण्डविशिष्ट-पाककर्त्रादेर्बोधात्। योगरूढो यथा—पङ्कजादिः। स हि अवयवशक्त्या पङ्कजनिकर्तृत्वेन रूपेण रूढ्या च पद्मत्वेन पद्मं बोधयति। तेन शैवाले स्थलकमले वा न तस्य मुख्यप्रयोगः; किन्तु लक्षणैव। अन्ये तु योगरूढपदात् क्वचिद्रूढ्यर्थमात्रबोधः क्षीराम्भोधिरित्यादौ। तत्राम्भोधिपदात्समुद्रत्वरूपेणैवान्वय-बोधात् क्षीरनीरयोरभेदान्वयानुपपत्त्या निराधारत्वरूपेणान्वयबुद्धेरभावात्। क्वचिदवयवार्थमात्रबोधः। यथा कह्लारं पङ्कजमित्यादौ। तत्र पद्मत्वजातेरभावाद् योगार्थस्यैवान्वय इत्याहुः। केचित्तु रूढयौगिकमपि चतुर्थभेदमाहुः, यथा—मण्डपादि। तद्धि कदाचिद्रूढ्यर्थमेव गृहविशेषमुपस्थापयति। कदाचिद्योगार्थमेव मण्डपानकर्त्तारं पुरुषमिति। रूढियोगार्थयोरभेदान्वयानर्हत्वात्। शक्तिग्राहकं च व्याकरणादि। तदुक्तम्—

**शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।**

व्याकरणाद्यथा 'भू सत्तायाम्' इत्यादौ। उपमानात्—'गोसदृशो गवय-पदवाच्य' इत्यादौ। कोषात्—'इन्द्रो मरुत्वान्मघवा' इत्यादौ। आप्तवाक्यात्—'अयं गवय' इत्यादौ। व्यवहारतः—'घटमानय' इत्यादावव्युत्पन्नस्य व्युत्पन्नवृद्ध-कृतस्य कम्बुग्रीवादिमद्व्यक्तेर्देशान्तरसंयोगादेर्ज्ञानात्। वाक्यस्य शेषात्—'यवमयश्चरुर्भवति' इत्यादौ। म्लेच्छानां यवशब्दस्य कङ्गुषु व्यवहारेऽपि—

**वसन्ते सर्वसस्यानां जायते पत्रशातनम्।**
**मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः।।**

इत्यादेर्दीर्घशूके। विवरणात्—पचति पाकं करोतीत्यादेः पचादेः पाकादौ। सिद्धपदसान्निध्यात्—'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ बोध्यम्।

शक्यसम्बन्धो लक्षणा। 'मुखं चन्द्र' इत्यादौ गौण्यां चन्द्रपदशक्यस्य चन्द्रस्य मुखे सम्बन्धः। गङ्गायां घोष इति शुद्धायां गङ्गापदशक्यस्य प्रवाहस्य तीरे संयोगः। सा

द्विविधा—निरूढा प्रयोजनवती च। निरूढा यथा—'नील: पट' इत्यादौ लाघवाद् गुणमात्रशक्तानां नीलादिपदानां समवायसम्बन्धेन नीलादिमत्परत्वात्। द्वितीया द्विविधा—गौणी शुद्धा च। शक्यस्य सादृश्यात्मक: सम्बन्धो गौणी, तदन्यसम्बन्ध: शुद्धा। गौणी द्विविधा—सारोपा साध्यवसाना च। आद्या उपमानोपमेययोरुपादाने 'मुखं चन्द्र' इत्यादौ। द्वितीया उपमेयस्यानुपादाने 'चन्द्रोऽयम्' इत्यादौ। तत्राद्ये रूपकालङ्कार:, द्वितीये त्वतिशयोक्तिभेद इति विवेक:। तदुक्तं **काव्यप्रकाशे**—

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।**
**विषय्यन्तः कृतेऽन्यस्मिन् भवेत्साध्यवसानिका।।**

(उ.२, का.११)

यस्मिन्नारोप्यते तद्विषय:, यदारोप्यते तद्विषयीति बोध्यम्। यथा 'चन्द्रो मुखम्' इत्यत्र चन्द्रो मुखे आरोप्यत इति चन्द्रो विषयी मुखं विषय इति विषयिविषययो: पृथङ्निर्दिष्टयोरभेद आरोप:। अप्रयुक्ते विषये विषय्यभेद-स्त्वध्यवसानमिति विशेष:। आरोपे ताद्रूप्यं प्रतीयते, अध्यवसाने तु मुखत्वादिवैधर्म्यानुपस्थित्या सर्वथैवाभेद इति विवेक:। शुद्धा पञ्चविधा—जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था, सारोपा, साध्यवसाना चेति। जहत्स्वार्था यथा—गङ्गायां घोष इत्यादौ शक्यप्रवाहसंयोगिनस्तीरस्यैव इतरपदार्थान्वयेन प्रवाहरूपस्वार्थान्वयबहिर्भावात्। अत्र तीरस्य पावनत्वप्रतीति: फलम्। एवम् 'उपकृतं बहु तत्र किमुच्यते' इत्यादौ अपकारिणि उपकृत-मित्यनन्वयात्स्वार्थविरुद्धस्यापकारादेर्विरोधसम्बन्धेन प्रतीते:। अत्र स्वसाधुत्वप्रतीति: फलम्। अजहत्स्वार्था यथा—'कुन्ता: प्रवेश्यन्ताम्' इत्यादौ। भोजनाद्यर्थप्रतीते: कुन्तादीनामनन्वयात्कुन्तादिपदस्य कुन्तादिमत्सु पुरुषेषु लक्षणा, पुरुषादेर्भोजनाद्यर्थ-प्रतीते: पुरुषसाहित्येन कुन्तादेरपि क्रियान्वय इत्यजहत्स्वार्था। अत्र तेषां निर्दयप्रहर्तृत्वं फलम्। जहदजहत्स्वार्था यथा—पटैकदेशदाहे पटो दग्ध:, पुष्पितं वनमित्यादौ। एकदेशरूपस्वार्थपरित्यागेन एकदेशान्तररूपस्वार्थपरत्वात्। अत्र भूयस्त्वादिप्रतीति: फलम्। सारोपा यथा—आयुर्घृतमित्यादौ। अत्र जनकत्वं सम्बन्ध:, इतरवैलक्षण्यप्रतीति: फलम्। साध्यवसाना यथा—आयुरेवेदमित्यादौ। आयुर्जनकत्वाव्यभिचारप्रतीति: फलम्। तदेवं सप्तविधा फललक्षणेति सङ्क्षेप:।

गङ्गाया घोष इत्यादौ लक्षणया तीरादिबोधेऽपि शैत्यादिप्रतीतेस्तद-साध्यत्वात्। यया तत्प्रतीति: सा व्यञ्जना। तदुक्तं काव्यप्रकाशे—

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।**इति। (उ.२, का.१४)

एतद्बोध्यश्चार्थो ध्वनिरित्युच्यते। स द्विविधः—शक्तिमूलो लक्षणामूलश्च। शक्तिमूलो विवक्षितान्यपरवाच्यः, लक्षणामूलस्तु अविवक्षितवाच्य इत्युच्यते। आद्योऽसंल्लक्ष्यक्रमः संल्लक्ष्यक्रमश्चेति द्विविधः। असंल्लक्ष्यक्रमो रसादिः। संल्लक्ष्यक्रमस्तु वस्त्वलङ्कारारूपभेदाद् द्विविध इति शब्दशक्तिमूलस्य त्रैविध्यम्। लक्षणामूलस्तु द्विविधः—अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। यत्र वाच्योऽप्यर्थो रूपान्तरेण संल्लक्ष्यते स आद्यः। यत्र वाच्यस्य केनापि रूपेणान्वयप्रवेशः स द्वितीयः। एषां भेदान्तराण्यग्रे वक्ष्यामः।

ननु रसादेरसंल्लक्ष्यक्रमत्वं कथमिति चेत्, उच्यते। न हि विभावादय एव रसाः; किन्तु रसस्तैर्निष्पद्यत इत्यस्ति क्रमः। तत्क्रमसत्त्वेऽपि क्रमानवबोधात्। अत्र **भरतसूत्रम्**—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति।

अत्र **भट्टलोल्लटादयः**—स्थायिनां रत्यादीनां विभावेन सह जन्यजनकभाव उद्दीप्योद्दीपकभावश्च, अनुभावेन ज्ञाप्यज्ञापकभावः, व्यभिचारिभिः पोष्यपोषकभावः सम्बन्धः। निष्पत्तिस्तु क्रमेणोत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः। तथा हि ललनादिभिरालम्बनैर्जनित उद्दीपनविभावैश्चन्द्रादिभिरुद्दीपितः कटाक्षादिभिरनुभावैः प्रतीतियोग्यः कृतो निर्वेदादिभिर्व्यभिचारिभिः पोषितो रामादावनुकार्ये स्थितो रत्यादिरूपो रसः। स तुल्यरूपत्वान्नटे आरोप्यमाणः सामाजिकानां चमत्कार-हेतुरित्याहुः।

**श्रीशङ्कुकस्तु** विभावादिभिः सह स्थायिनः संयोगाद् व्याप्यव्यापक-रूपात्सम्बन्धाद्रसस्य निष्पत्तिरनुमितिरित्यर्थः। 'राम एवायम्' इत्ययोग्यव्यवच्छेदः, 'अयमेव राम' इत्यन्ययोगव्यवच्छेद इति नियमविषया सम्यग्बुद्धिः। यस्यां समनन्तरमेवाप्रामाण्यं गृह्यते सा मिथ्याधीः। यथा 'रामोऽयम्' इति ज्ञानानन्तरं 'नायं राम' इति बाधावतारे 'रामोऽयम्' इति पूर्वज्ञानम्। 'रामोऽयं न वा' इति विरुद्धोभयकोटिकबुद्धिः संशयः। 'रामसदृशोऽयम्' इति सादृश्यधीः। एताभ्यो लोकसिद्धाभ्यो विलक्षणया चित्रे तुरगोऽयमितिवद् रामोऽयमिति बुद्ध्या प्रथमं पक्षभूतो नटो विषयीक्रियते, तेनाभ्यासातिशयवशाद् रोमाञ्चादिप्रदर्शने रतिव्याप्यत्वं गृहीतवतां सामाजिकानां रत्याद्यनुमितिः। रोमाञ्चादीनां कृत्रिमत्वेनाज्ञानात्। न च नटे रत्यभावाद्बाधः, रत्यभावनिश्चयाभावात्। न चानुमित्या चमत्कारो न स्यात्, साक्षात्कारस्य चमत्कारत्वादिति वाच्यम्। विषयसौन्दर्यस्यैव तन्नियामकत्वात्। घटादिसाक्षात्कारस्याचमत्कारतया रतिसाक्षात्कारात्कथं चमत्कार इत्याशङ्कायां त्वयापि तथैव वाच्यत्वादित्याह।

**भट्टनायकस्तु** स्थायिनो विभावादीनां च भोज्यभोजकभावसम्बन्धाद्रसस्य निष्पत्तिर्भोग इति सूत्रार्थः। तथा हि काव्यस्य त्रयो व्यापाराः—अभिधा भावकत्वं भोगकर्तृत्वं च। अभिधा द्विविधा—निरन्तरार्थनिष्ठा सान्तरार्थनिष्ठा च। आद्या शक्तिरेव। द्वितीया लक्षणेति विवेकः। अभिधाभिन्नं व्यापारद्वयं नाट्येऽपि। काव्येऽभिधया पदार्थोपस्थितिः, नाट्येऽभिनयेनेति विशेषः। तथोक्तरीत्या पदार्थोपस्थितिः। द्वितीयेन भावकत्वाख्यव्यापारेण सीतादीनां कान्तात्वादिरूपेणावस्थानम्। अभिधाजन्यायाः सीतात्वादिप्रकारकोपस्थिते रसाननुगुणत्वात्। आराध्यत्वज्ञानस्य तद्विरोधित्वात्। एवं साधारणीकरणेन भावकत्वनिवृत्तौ तृतीयस्य भोगकर्तृत्वव्यापारस्य प्रभावाद् रजस्तमसोरभिभवे सत्त्वोद्रेके च प्रकाशमाना आनन्दमयी या संवित् तत्र विगलितवेद्यान्तरत्वेन स्थितिरूपा या विश्रान्तिस्तत्स्वरूपेण साक्षात्कारेण विषयीक्रियमाणो रत्यादिस्थायिभावो रसः। स्थायिनो भावकत्वव्यापारेण साधारणीकृतत्वात् सत्त्वादीनां त्रयाणामुद्रेके सुखदुःखमोहाः क्रमात्प्रकाशन्ते। उद्रेकश्च स्वेतरद्वयाभिभव[1] इति साङ्ख्यसिद्धान्तादिति व्याचख्यौ।

**अभिनवगुप्तपादाचार्यास्तु** व्यङ्ग्यव्यञ्जकभावरूपसम्बन्धपरतया व्याचख्युः। लोके कटाक्षादौ रतिव्याप्यत्वज्ञानवतां सामाजिकानामन्तःकरणे वासनारूपतया रत्यादिः प्रत्यवतिष्ठते, स स्थायी। लोके रत्यादिकारणानि प्रमदादीनि, तत्कार्याणि कटाक्षादीनि, निर्वेदादीनि सहकारीणि। तेषामेव काव्यादौ क्रमेण विभावानुभावव्यभिचारिशब्दैर्व्यवहारः। न चैवं नामभेदमकिञ्चित्करमिति वाच्यम्। विभावनानुभावनसञ्चारणव्यापारभेदस्वीकारात्। तेषां च ईषत्स्फुटस्फुटतरप्रकाशरूपत्वात्। तदुक्तम्—

**विभावा अनुभावाश्च तथैव व्यभिचारिणः।**
**प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम्।।**

लोके सम्बन्धिविशेषीयत्वेन गृह्यमाणे कान्तादौ कटाक्षादिलिङ्गकरत्यनुमितौ न चमत्कारः, काव्यादौ वाक्यार्थबोधानन्तरं चमत्कारविशेष इत्यनुभवसिद्धत्वात्। एतेन शकुन्तलादीनां सामाजिकैरसम्बन्धात् कथं तेषां रसोद्बोध इति निरस्तम्। काव्यादौ तेषां साधारणीकरणमिति स्वीकारात्। 'ता एव परिहृतविशेषा रसहेतव' इति सूत्रकारोक्तेः। एवं हि स्थायिनोऽपि तद्बोध्यम्। प्रमातृविशेषनिष्ठत्वेन प्रतीयमानस्वरूपपरिमितत्वे रसस्वरूपानुपपत्तेः। स्वगतत्वेन रसादिप्रतीतौ सभ्यानां व्रीडाभयाद्यापत्तेः। परगतत्वेनानास्वाद्यत्वप्रसङ्गात्। साधारणस्वीकारेणैव सर्वदोषपरिहारात्। एवं हि सति विभावादिभिः स्थायिन्यभिव्यज्यमाने चैतन्यानन्दस्वरूप आत्मा भासते। वेदान्तिमते ज्ञानमात्रे तद्भानस्वीकारात्। न च घटादिज्ञानेऽप्यानन्दो-

१. बलवद्विजातीयसंवलितत्वमभिभवः।

द्बोधापत्तिः, तत्र आनन्दांशे आवरणभङ्गाभावात्, अत्र सहृदयत्वविशेषस्यैव तद्भङ्गहेतुत्वात्। तथा च रत्याद्यवच्छिन्नं चैतन्यमावरणभङ्गादानन्दरूपतया प्रकाशमानं रसपदार्थः। विभावादिचर्वणाया रसव्यञ्जकत्वात्तन्निष्ठयोरावरणभङ्गनिष्ठयोर्वा उत्पत्तिविनाशयोरारोपाद्रस उत्पन्नो रसो नष्ट इत्यादिव्यवहारः। चैतन्यस्यात्मरूपतया उत्पत्तिविनाशानर्हत्वात्। चर्वणानिवृत्तौ च प्रकाशस्यावृतत्वाद्विद्यमानस्यापि स्थायिनो न प्रकाशः। तदुक्तं **काव्यप्रकाशे**—'विभावादिचर्वणावधिः' इति। चर्वणा तु आवरणभङ्गो रत्याद्याकारान्तःकरणवृत्तिविशेषो वेति बोध्यम्। सत्यां वाभिव्यक्तौ विभावादिरपि विषयः। पानकरसन्यायेन चर्व्यमाण इत्युक्तेः। स चायं न कार्यः, विभावादिज्ञाननाशेऽपि रसानुभवप्रसङ्गात्। निमित्तनाशे कार्यनाशानङ्गीकारात्। रत्यवच्छिन्नचैतन्यस्य रसत्वात्। चैतन्यस्य कार्यत्वशङ्कानवताराच्च। नापि ज्ञाप्यः, विभावादिजन्याभिव्यक्तिविशिष्टरसादेरेव सत्त्वात्। तस्य च विभावादिव्यक्तिपूर्वमसत्त्वात्। पूर्वसत एव घटादेरालोकादिनाभिव्यक्तिदर्शनात्। तद्ग्राहकं न निर्विकल्पकम्। विभावादिज्ञानस्य रसनिर्विकल्पकजननायोग्यत्वात्। निर्विकल्पकस्य जन्यज्ञानाजन्यत्वनियमात्। नापि सविकल्पकम्। विभावादिसमूहालम्बनस्य रसत्वात्तेषां सम्बन्धग्रहाभावात्। न च स्वभिन्ननिर्विकल्पकाग्राह्यत्वेऽपि[1] स्वप्रकाशकत्वात्स्वाविषयकत्वात्। इदं च युक्तयोगिज्ञानाद्विलक्षणम्, तस्यासन्मात्रविषयकत्वात्। अस्य च गुणालङ्काराद्यधिकविषयत्वात्। युञ्जानयोगिज्ञानादपि तथा, तस्य भेदावगाहित्वात्। लौकिकरत्यादिज्ञानादपि तथा, अस्य गुणालङ्काराद्यधिकविषयत्वात्। ननूभयग्राह्यत्वनिषेधे ग्राह्यत्वमेव न स्यादिति चेत्, सत्यम्, लोकोत्तरत्वादभिव्यक्तेरिति दिक्। ननु—

**रजनिरजनि चन्द्रिकावदाता मलयजसौरभमेदुरः समीरः।**
**कलमिह कलयन्ति चञ्चरीकास्तदनुनयः परिहारि मा प्रियस्य।।**

इत्यादावालम्बनविभावमात्रस्य,

**शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा।**
**माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता।।**

इत्यादावनुभावमात्रस्य,

**स्तिमितकुसुमितानामुल्लसद्भ्रूलतानां**
**मसृणमुकुलितानां प्रीतिविस्तारभाजाम्।**
**प्रतिनयननिपाते किञ्चिदाकुञ्चितानां**
**विविधमहमभूवं पात्रमालोकितानाम्।।**

---

१. अत्र किञ्चित् त्रुटितं प्रतिभाति।

इत्यादौ सञ्चारिमात्रस्य सत्त्वेऽपि रसानुभवाद्विभावादीनां प्रत्येकं रसाभिव्यञ्जकत्वात्सूत्रे द्वन्द्वे मिलितानामुपादानं कथमिति चेत्, सत्यम्। तत्राप्यन्तरेण द्वयोराक्षेपात् प्रत्येकमात्रस्य रसान्तरसाधारण्यात्। रतिर्यत्र स्थायी स शृङ्गारः। रतिश्च स्त्रीपुंसयोरन्योन्यालम्बनप्रेमाख्यश्चित्तवृत्तिविशेष इति **रसगङ्गाधरः**।

**सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान्।**
**यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः।।**

भरतः—

**यथा नराणां नृपतिः शिष्याणां गुरवो यथा।**
**तथैव सर्वभावानां स्थायी भावो महानिह।।**

स द्विविधः—सम्भोगो विप्रलम्भश्च। तदुक्तम्—

**अनुरक्तौ निषेवेते यत्रान्योन्यविलासिनौ।**
**दर्शनस्पर्शनादीनि स सम्भोगो मुदान्वितः।।**
**यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ।**

(सा.द.प.३, का.२१०,१८७)

**सम्भोगो यथा—**

**गाढालिङ्गनपूर्वमेव मनसा द्यूते जितं चुम्बनं**
**तत्किञ्चित्परिरभ्य दत्तममुना प्रत्यर्पितं चानया।**
**नैतत्तादृगिदं न तादृशमिति प्रत्यर्पणव्यग्रयो-**
**र्यूनोश्चुम्बनमेकमेव बहुधा रात्रिर्गता तन्वतोः।।**

यथा वा—

**मुक्ताः पतन्ति भूमौ बालाः कलयन्ति केवलां मुक्तिम्।**
**चुम्बत्यम्बरमवनीं विपरीते किं न विपरीतम्।।**

**विप्रलम्भो यथा—**

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तं स्तनं**
**मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।**
**शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते**
**पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी।।**

अयमभिलाषहेतुकः। पूर्वसङ्गमस्यानुपजातत्वात्। सङ्गमोत्तरकालीनो यथा—

अज्ज मए तेण विणा अणुहूअसुहाइं सम्भरन्तीए।
अहिणवमेहाण रवो णिसामिओ वज्झपडहव्व[1]।।

देवादिविषया रतिः प्राधान्येन व्यञ्जितो व्यभिचारी च भावः।

**देवविषया रतिर्यथा—**

अहं त्वकामस्त्वद्भक्तस्त्वं स स्वाम्यनपाश्रयः।
नान्यथेहावयोरर्थो राजसेवकयोरिव।।

**मुनिविषया यथा—**

भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे।।

**पुत्रविषया यथा—**

आलक्ष्य दन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति।।

एवं राजादिविषयत्वेऽप्युदाहार्यम्।

**व्यभिचारी यथा—**

शिलष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन्वदनविहृतिः किं कृता किं न दृष्टः।
नोक्तः कस्मादिति नववधूरन्तरालोचयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा।।

एत एवानौचित्यप्रवृत्त्या **आभासाः**।

**रसाभासो यथा—**

शस्त्रीकृतस्तरुवरो हरिपुङ्गवेन
लङ्केन्द्रवक्षसि मृणालमृदुः पपात।
तत्र स्थितैस्तु कुसुमैः कुसुमेषुरेनं
सीतावियोगविधुरं दृढमाजघान।।

---

१. अद्य मया तेन विना अनुभूतसुखानि स्मरन्त्या।
अभिनवमेघानां रवो निशामितो वध्यपटह इव।।इति च्छाया।

**भावाभासो यथा—**

**मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने**
**किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवोः।**
**किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः**
**किमम्बुरुहडम्बरैर्यदि तनूरियं किं श्रिया।।**

अत्र स्मरणमनौचित्यप्रवृत्तम्। एवं भावशान्तितदुदयसन्धिभावशबलानामप्यलक्ष्यक्रमत्वं बोध्यम्।

'रसभावतदाभासभावशान्त्यादिरक्रमः' (उ.४, का.२६) इति **काव्यप्रकाशोक्तेः।**

**।। इत्यसंल्लक्ष्यक्रमध्वनिः ।।**

संल्लक्ष्यक्रमध्वनिस्त्रिविधः—शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च। तदुक्तम्—

**'अनुस्वानाभसंल्लक्ष्यक्रमव्यङ्ग्यक्रमस्तु यः।**
**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।।**

(का.प्र.,उ.४, का.३७)

आद्यो द्विविधः, व्यङ्ग्यस्य वस्त्वलङ्कारत्वभेदात्।

**'अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा'।।** इत्युक्तेः।

(का.प्र.,उ.४, का.३८)

द्वितीयस्त्वष्टविधः। व्यञ्जकार्थस्यालङ्कारत्ववस्तुमात्रत्वरूपेण द्विविधस्यापि लोकसिद्धत्वकविप्रौढोक्तिमात्रकल्पितत्वाभ्यां द्वैविध्येन चातुर्विध्यम्। व्यङ्ग्यस्यापि वस्त्वलङ्कारत्वभेदेन द्वैविध्यमिति विभागात्। यस्तु कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेनापि वस्त्वलङ्कारयोर्भेद उक्तः, सोऽत्र न पुरस्कृतः। कविनिबद्धवक्तृनिबद्धवक्तृप्रौढोक्तिसिद्धत्वादिना भेदापत्तेः। तस्यापि कविनिबद्धत्वमविशिष्टमित्युक्तौ तु प्रथमस्यापि कविनिबद्धवक्तुर्लोकोत्तरवर्णनानिपुणत्वेन कवित्वानपायात्। तत्कल्पितस्यापि कविप्रतिभाकल्पितत्वदुर्वारत्वात्।

**शब्दशक्तिमूलोऽलङ्कारध्वनिर्यथा—**

**लंकालआणं पुत्तअ वसन्तमासेक्कलद्धपसराणम्।**
**आपीतलोहिताणं वेहेइ जणो पलासाणम्[१] ।।**

१. लङ्कालयानां पुत्रक! वसन्तमासैकलब्धप्रसराणाम्।
आपीतलोहितानां बिभेति जनः पलाशानाम्।।इति च्छाया।

अत्र पलाशादिपदानां राक्षसादिरूपद्वितीयार्थप्रतिपादकत्वमसङ्गतं मा भूदित्यतः किंशुकपुष्पे राक्षसोपमा व्यज्यते, रूपकापेक्षया प्रथमप्रतीतिकत्वात्। न च व्यङ्ग्यस्य प्राधान्यादलङ्कारत्वानुपपत्तिः, तस्य परोपकारकस्वरूपत्वादिति वाच्यम्। रसापेक्षया गुणीभावेऽपि वाच्यापेक्षयैव प्राधान्याङ्गीकारात्।

**तादृशवस्तुध्वनिर्यथा—**

**यामि विधावभ्युदिते पुनरेष्यामीति यत्त्वया कथितम्।**
**जानात्युदन्तमात्रं नेदं तत्त्वेन मुग्धवधूः।।**

अत्र प्रवासोद्यमान्निवर्त्तस्वेति वस्तुरूपोऽर्थस्तच्छब्दमात्रगम्यः। स शब्द-शक्तिमूलः, दैवादिपदोपादाने यथोक्तार्थानवबोधात्। तदर्थकपदान्तरप्रयोगेऽपि यो गम्यते, सोऽर्थशक्तिमूल इति विवेकः।

अथार्थशक्तिमूलानामुदाहरणम्। तेषु स्वतःसम्भविना वस्तुना वस्तुध्वनिर्यथा—

**राज्याभिषेकसलिलक्षालितमौलेः कथासु कृष्णस्य।**
**गर्वभरमन्थराक्षी पश्यति पदपल्लवं राधा।।**

इह मामेव प्रणंस्यतीति व्यज्यते। तेनैवालङ्कारस्य यथा—

**णीससिउक्कंपपुलइएहिं जाणंति णच्चिउं धण्णा।**
**अह्मारिसिहिं दिट्ठे पिअम्मि अप्पावि वीसरिओ[१]।।**

अत्र ता अधन्याः, अहं तु धन्येति व्यतिरेकः। तादृशालङ्कारेण वस्तुनो यथा—

**सा तइ सहत्थदिण्णं अज्जवि रेसुहअ गन्धरहिअंवि।**
**उव्वसिअणअरघरदेवएव्व णोमालिअं वहइ[२]।।**

अत्र नगरदेवतेवेत्युपमया तस्या अवश्यादरणीयत्वम्। तेनैवालङ्कारस्य यथा—

**एकैकशो युवजनं विलङ्घमानाक्षनिकरमिव तरला।**
**विश्राम्यति सुभग! त्वामङ्गुलिरासाद्य मेरुमिव[३]।।**

---

१. निःश्वसितोत्कम्पपुलकितैर्जानन्ति नर्तितुं धन्याः।
अस्मादृशीभिर्दृष्टे प्रिये आत्मापि विस्मृतः।।इति च्छाया।

२. सा त्वया स्वहस्तदत्तामद्यापि रे सुभग! गन्धरहितामपि।
उद्वसितनगरगृहदेवतेव नवमालिकां वहति।।इति च्छाया।

३. अत्र युवजनपदेन स्पृहणीयत्वं द्योत्यते। अक्षाणां=मालामणीनां निकरं समुदायमिव एकैकशः=प्रत्येकं युवजनं विलङ्घमाना=गणयन्ती पक्षे उल्लङ्घयन्ती तरला अङ्गुलिः मेरुं=मालाप्रान्तमणिमिव हे सुभग! त्वामासाद्य न विश्राम्यति नोल्लङ्घयिष्यतीत्यर्थः। एतादृशनायिकासक्तिर्न भाग्यं विनेति व्यज्यते। मेरोरुल्लङ्घनं न कार्यमिति जापकसम्प्रदायः।

अत्रोपमया युवान्तरापेक्षया तद्व्यतिरेकः। कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुनो यथा—

**लक्ष्मीनिःश्वासानलपिण्डीकृतदुग्धजलधिसारभुजः।**
**क्षीरनिधितीरविहगा यशांसि गायन्ति राधायाः।।**

अत्रोक्तार्थस्य कविमात्रकल्पितत्वात्तेन सपत्नीसौभाग्यं स्त्रीणामतिदुःसहमिति वस्तु। तेनैवालङ्कारस्य यथा—

**सा तुज्झ वल्लहा तं सि मज्झ वेसोसि तीअ तुज्झ अहं।**
**बालअ फुडं भणामो पेम्मं किल बहुविआरंत्ति[१]।।**

अत्र सा तव वल्लभा त्वं मम वल्लभो द्वेष्योऽसि तस्यास्तवाहं द्वेष्या इति वस्तुना मयि त्वदनुरक्तायामपि न तवानुराग इति विशेषोक्तिस्तस्यां त्वदनुराग-हीनायामपि त्वदनुराग इति विभावना च। तादृशेनालङ्कारेण वस्तुनो यथा मम—

**आथर्वणीमुपनिषद्विद्यामिव लब्धुमेष त्वाम्।**
**शिरसा वहति भवत्पदनूपुररक्तोत्पलकलापम्।।**

तेनैवालङ्कारस्य यथा मम—

**उत्तंसितं किसलयं श्रवणाभरणारुणमणीनाम्।**
**मिलनात्प्रथममशोकः पदपरिरम्भेण पुष्पितः पश्चात्।।**

अत्र हेत्वलङ्कारेण रक्तमणीनामशोकतादात्म्येन रूपकम्। यत्र केचिच्छब्दाः परिवृत्तिसहाः केचित्तदसहाः स उभयशक्त्युत्थः। यथा मम—

**पीताम्बरेण चपलान्तरात्मना घनतमालनीलेन।**
**भवतामिव व्रतक्षतिरारम्भि न नाम कासां वा।।**

अत्र तमालनीलेत्येतत्पदं परिवृत्तिसहं न त्वन्यानि। अयं भेदो वाक्यमात्रे। अन्ये तु पदे वाक्ये चेति विशेषः। एवं सङ्क्षिप्य प्रसङ्गादुक्ता ध्वनिविशेषाः। भेदान्तराण्याकरेषु द्रष्टव्यानि। विस्तरभयान्नात्र प्रपञ्चितानीति दिक्।

लक्षणामूलध्वनिद्वये **अविवक्षितवाच्यो यथा—**

**एकच्चि अधूआ गहवइस्स महिलत्तणं समुव्वहइ।**
**अणिमिसणअनो सकलो जीए देव्वीकओ ग्गामो[२]।।**

१. सा तव वल्लभा त्वमसि मम द्वेष्योऽसि तस्यास्तवाहम्।
बालक! स्फुटं भणामः प्रेम किल बहुविकारमिति।।इति च्छाया।

२. एकैव युवती गृहपतेर्महिलात्वं समुद्वहति।
अनिमिषनयनः सकलो यया देवीकृतो ग्रामः।।इति च्छाया।

अत्र महिलापदस्य प्रशस्तमहिलात्वेन रूपेण महिलायां लक्षणा लोकोत्तररूपवत्त्वं व्यङ्ग्यम्।

**अत्यन्ततिरस्कृतवाच्यो यथा—**

**आम असइह्म अह्मे पइवएण तुह मलिणिअं गोत्तम्।**
**किं उण जणस्स जाएव्व चंडिलं ताण कामेमो[1]।।**

अत्र पतिव्रतापदं तद्विरुद्धमसतीत्वं लक्षयति। त्वया मम दोषोद्भावनेऽपि मया तव दोषो नोद्भाव्यत इति स्वसाधुत्वं व्यङ्ग्यम्। यद्यप्युत्तरार्द्धे तद्दोष उद्भावितस्तथापि जनजायात्वरूपसामान्यधर्मपुरस्कारेणैवेति न दोषः। अयमत्र सङ्ग्रहः—

**द्वौ शाब्दी शक्तिरष्टार्थी द्व्युत्थैकं भेदमञ्चति।**
**द्वौ लक्षणेत्यमी भेदाः प्राधान्येन त्रयोदश।।** इति सङ्क्षेपः।

विप्रलम्भे दशावस्था **हरिहरेणोक्ताः—**

**प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत्।**
**अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्त्तनम्।।**
**उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते।**
**उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिस्तथाष्टमे।।**
**नवमे जडता चैव मरणं दशमे भवेत्।।**

तद्विषयकोत्कटेच्छा **अभिलाषः**। यथा—

**मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयान्तरुपेतयोः।**
**ग्रहणशक्तिरभूदिदमीययोरपि न सम्मुखवस्तुनि वास्तुनि।।**

यथा वा—

**सम्भूयैव सुखानि चेतसि परं भूमानमातन्वते**
**यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।**
**यद्बालेन्दुकलोदयादवचितैः सारैरिवोत्पादितं**
**तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्।।**

तत्समागमोपायपर्यालोचनं **चिन्ता**। फलेच्छानन्तरमुपायेच्छोत्पत्तेरावश्यकत्वात्। तदुक्तम्—

**केनोपायेन सम्प्राप्तः कथं वा स भवेन्मम।**
**दूतीनिवेदितैर्भावैरिति चिन्तां विनिर्दिशेत्।।**

१. आम् असत्यः स्म वयं पतिव्रतेन तव मलिनितं गोत्रम्।
किं पुनर्जनस्य जायेव चण्डित्वं तन्न कामयामः।।इति च्छाया।

**आकेकरार्द्धविप्रेक्षितानि रसनावलयपरामर्षः।**
**नीवीनाभ्योः सन्दर्शनं च कार्यं द्वितीये तु।।**

इदं पुरुषव्यापारस्याप्युपलक्षणम्। यथा—

**किं तंवि तुइ ण णाअं जह सा आसंदि आसदिआणं बहुआणम्।**
**काऊण उच्चवचिअं तुह दंशणलेहला पडिआ।।**

यथा वा—

**त्वत्प्रापकात्त्रस्यति नैनसोऽपि त्वय्येव दास्येऽपि न लज्जते यत्।**
**स्मरेण बाणैरतितक्ष्य तीक्ष्णैर्लूनः स्वभावोऽपि कियान्किमस्य।।**

तद्विषयकसंस्कारजन्यं ज्ञानं **स्मृतिः**। तदुक्तम्—

**मुहुर्मुहुर्निःश्वसितैर्मनोरथविवर्त्तनैः।**
**प्रद्वेष्या अन्यकार्याणामनुस्मृतिरुदाहृता।।**

यथा—

**पिअसंमरणपलोट्टंतवाहविणिवाअभीआए।**
**दिज्जइ वंकग्गीआइ दीवओ पहिअजाआए[१]।।**

यथा वा—

**लीनेन प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च**
**प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च।**
**सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-**
**श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया।।**

तद्‌गुणानामुत्कर्षप्रतिपादनं **गुणकीर्त्तनम्**। यथोक्तम्—

**अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षणैः।**
**नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद्‌गुणकीर्त्तनम्।।**

यथा—

**तदद्य विश्रम्य दयालुरेधि मे**
**दिनं निनीषामि भवद्विलोकिनी।**
**नखैः किलाख्यायि विलिख्य पत्रिणा**
**तवैव रूपेण समः स मत्प्रियः।।**

१. किं तदपि त्वया न ज्ञातं यथा सा आसन्दिकानां बहूनाम्।
कृत्वा उच्चावचिकां तव दर्शनलालसा पतिता।।इति च्छाया।

२. प्रियसंस्मरणप्रवर्तमानवाष्पविनिपातभीतया।
दीयते वक्रग्रीवया दीपकः पथिकजायया।।इति च्छाया।

यथा वा—

**सा रामणीयकनिधेरधिदेवता वा**
**सौन्दर्यसारसमुदायनिकेतनं वा।**
**तस्याः सखे! नियतमिन्दुसुधामृणाल-**
**ज्योत्स्नादिकारणमभून्मदनश्च वेधाः।।**

विषयेष्वरतिः **उद्वेगः**। तदुक्तम्—

**आसने शयने वापि न तिष्ठति न हृष्यति।**
**नित्यमेवोत्सुका च स्यादुद्वेगस्थानमेव तत्।।**

यथा—

**अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।**
**अलमलमालि! मृणालैरिति वदति दिवानिशं बाला।।**

यथा वा—

**परं जोह्ला उह्ला गरलसरिसो चन्दनरसो**
**खदक्खारो हारो रअणिपवणा देहतवणा।**
**मुणाली वाणाली जलदि अ जलद्दा तणुलदा**
**वरिट्ठा जं दिट्ठा कमलवअणा दीहणअणा[१]।।**

तदनुध्यानजन्यो वचनव्यापारो **विलापः**। तदुक्तम्—

**इह स्थित इहासीत इह चोपगतो मया।**
**इति तैस्तैर्विलपितैर्विलापं सम्प्रयोजयेत्।।**
**उद्विग्नात्यन्तमौत्सुक्यादरत्या च विलापिनी।**
**ततस्ततश्च भ्रमति विलापस्थानमाश्रिता।।**

यथा—

**अमअमअ गअणसेहर रअणीमुहतिलअ चंद दे छिवसु।**
**छित्तो जेहि पिअअमो ममंवि तेहिं च्चिअ करहिं[२]।।**

१. परं ज्योत्स्ना उष्णा गरलसदृशश्चन्दनरसः
क्षतक्षारो हारो रजनिपवना देहतपनाः।
मृणाली बाणाली ज्वलति च जलार्द्रा तनुलता
वरिष्ठा यद्दृष्टा कमलवदना दीर्घनयना।।इति च्छाया।

२. अमृतमय! गगनशेखर! रजनीमुखतिलक! चन्द्र! त्वं स्पृश।
स्पृष्टो यैः प्रियतमो ममापि तैरेव करैः।।इति च्छाया।

यथा वा—

**उन्मीलन्मुकुलकरालकुन्दकोषप्रश्च्योतद्धनमकरन्दगन्धबन्धो!।**
**तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन्यवन! मम स्पृशाङ्गमङ्गम्।।**

प्रियभावनाजन्यव्यापार **उन्मादः**। तदुक्तम्—

**तत्संश्रयां कथां युङ्क्ते सर्वावस्थागतोऽपि हि।**
**प्रद्वेतिचापरान् पुंसो यत्रोन्मादः स उच्यते।।**

**तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम्।**
**रोदिति विहारकाले नात्यमिदं स्यात्तथोन्मादे।।**

स द्विधा। कायिक-वाचिकभेदात्।

**आद्यो यथा—**

**माजूर पिआलिङ्गणसुण्णब्भमिरीण बाहुलइआणम्।**
**तुह्लीअं कुरु ण्णेहं इमेण माणंसिणिमुहेण[१]।।**

यथा वा—

**बिभेति रुष्टासि किलेत्यकस्मात्स त्वां किलोपैति हसत्यकाण्डे।**
**यान्तीमिव त्वामनु यात्यहेतोः पृष्टस्त्वय्येव प्रतिवक्ति मोघम्।।**

**द्वितीयो यथा—**

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत।**
**क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना।।**

यथा वा—

**हृत्तस्य यन्मन्त्रयते रहस्त्वां तद्व्यक्तमामन्त्रयते मुखं यत्।**
**तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य।।**

मदनपीडाजनितसन्तापादिविकारो **व्याधिः**। तदुक्तम्—

**सामदानादिसंयोगैः काम्यैः सम्प्रेक्षणैरपि।**
**सर्वैर्निराशीकरणाद्व्याधिः समुपजायते।।**

---

१. मा खिद्यस्व प्रियालिङ्गनशून्यभ्रमणयोर्बाहुलतिकयोः।
तूष्णीकं कुरु स्नेहमनेन मनस्विनीमुखेन।।इति च्छाया।

यथा—

णीसासा हारवल्लीसरिसपसरणा चन्दणुव्वेअकारी
चण्डो (दीहो) देहस्स दाहो सुमिरणसरणा हाससोहामुहम्मि।
अंगाणं पण्डुभावो दिअहससिकलाकोमलो किञ्च तीए
णिच्चं वाहप्पवाहा सुहअ तुह कए होंति कुल्लाहितुल्ला[1]।।

यथा वा—

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं यदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि वा पाण्डुमधुरं
वपुः क्षामक्षामं वहति रमणीयश्च भवति।।

जडता हीनचेष्टत्वमङ्गानां मनसस्तथा। इति दर्पणः।

तथा च भरतः—

पृष्टा न किञ्चिद्ब्रूते च न शृणोति न पश्यति।
हा कष्टवाक्सतूष्णीका जडतायां गतस्मृतिः।।
अकाण्डदत्तहुङ्कारा तथा प्रशिथिलाङ्गिका।
श्वासग्रस्तानना चैवं जडताभिनये भवेत्।।

यथा—

वअणे वअणे अ चलन्तसीससुण्णावहाणहुङ्कारम्।
सहि! देंती णीसासन्तरेसु कीस ह्म दूमेसि[2]।।

**दर्पणे—**

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते।
जातप्रायं तु तद्वाच्यं चेतसाकाङ्क्षितं तथा।।

---

१. निःश्वासा हारवल्लीसदृशप्रसरणाश्चन्दनोद्वेगकारी
चण्डो (दीर्घो) देहस्य दाहः स्मरणशरणा हासशोभा मुखे च।
अङ्गानां पाण्डुभावो दिवसशशिकलाकोमलः किञ्च तस्या
नित्यं वाष्पप्रवाहाः सुभग! तव कृते भवन्ति कुल्याभिस्तुल्याः।।इति च्छाया।

२. वचने वचने च चलच्छीर्षशून्यावधानहुङ्कारम्।
सखि! ददती निःश्वासान्तरेषु कुतोऽस्मान्दूनयसि।।इति च्छाया।

**आद्यं यथा—**

**अधिकः सर्वेभ्यो यः प्रियः प्रियेभ्यो हृदि स्थितः सततम्।**
**स लुठति विरहे जीवः कण्ठेऽस्यास्त्वमिव सम्भोगे।।**

यथा वा—

**सव्यापसव्यत्यजनाद्द्विरुक्तैः पञ्चेषुबाणैः पृथगर्जितासु।**
**दशासु शेषः खलु तद्दशा या तया नभः पुष्प्यतु कोरकेण।।**

**द्वितीयं यथा—**

**अनलभावमियं स्वनिवासिनो न विरहस्य रहस्यमबुद्ध्यत।**
**प्रशमनाय विधाय तृणान्यसून् ज्वलति तत्र तदुज्झितुमैहत।।**

यथा वा—

**यदि प्रियावियोगेऽपि खिद्यते दीनदीनकम्।**
**तदिदं दग्धमरणमुपयोगं क्व यास्यति।।**

अज्ञाते विषये इच्छानुदयात् शाब्दं चाक्षुषं वा प्रियज्ञानम्। तदुक्तम्—

**श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः।**
**दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते।।**
**श्रवणं तु भवेत्तत्र दूतवन्दीसखीमुखात्।**
**इन्द्रजाले च चित्रे च साक्षात्स्वप्नेऽपि दर्शनम्।।**

**श्रवणं यथा श्रीरुद्रचन्द्रदेवानाम्—**

**यस्याकर्णनमात्रतोऽपि भवतोऽवस्थेयमीदृग्विधा**
**येनाङ्गे मलयानिलोऽपि भवति प्रायः करीषानलः।**
**हंहो मानस! बालिश! प्रतिपदं प्रत्याशमुद्ग्रीविकां**
**कुर्वन् तं नयनातिथिं पुनरहो कर्त्तुं किमाकाङ्क्षसि।।**

**इन्द्रजाले दर्शनं यथा मम—**

**स्मेरस्वर्णसरोजकेसरशिखासन्दोहसन्देहकृ-**
**द्भासा वार्षिकवारिवाहशकलश्रीमानसीमाहरः।**
**तारुण्याधिगमोत्तरातिपतितानात्यन्तिकद्राघिमा-**
**नेहस्को नयनस्य सेवननतां सख्याः समासादयत्।।**

इह रुक्मिण्या इन्द्रजाले श्रीकृष्णस्य।

**चित्रे यथा—**

**शनैरश्रृण्वन्नवदन्नपश्यंश्चैव किञ्चन।**
**तन्मयीभूय चित्रस्थ इव सोऽप्यभवच्चिरम्।।**

अत्र तापस्या लिखिताया मन्दारवत्याः सुन्दरसेनस्य।

**तस्थौ चित्रपटन्यस्तनिश्चलोत्फुल्ललोचना।**
**अधिष्ठितेव सुप्तेव विनिद्रं लिखितेव च।।**

अत्र तल्लिखितस्य मन्दारवत्याः।

**साक्षाद्यथा—**

**भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं**
**दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।**
**साक्षात्कामं नवमिव रतिर्मालती माधवं यद्**
**गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति।।**

**स्वप्ने यथा—**

**तदाकर्ण्य वचस्तस्य तत्कन्यारूपदर्शने।**
**अतृप्त एव सहसा प्रबुद्धोऽस्मि निशाक्षये।।**

मुक्ताफलध्वजस्य पूर्वजन्मानुभूतां पद्मावतीं स्वप्ने दृष्टवत इयमुक्तिः। प्रसङ्गाद्रसान्तराण्युदाह्रियन्ते। हासस्थायिभावो **हास्यः**। यथा—

**मम मअणमणंगं मम्महं वड्ढअन्ती-**
**शिशिअशअणके मे णिद्दअं पक्खिवंती।**
**पसलसि भअभीदा पक्खलन्ती खलन्ती**
**मम वशमनुजादा लावणस्सेव कुन्ती[१]।।**

अत्र यद्व्यापाराद्धासोत्पत्तिः स आलम्बनम्। अधरस्पन्दादिरनुभावः —

**ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा।**
**सुप्तं निद्रावहित्थं च हास्ये भावाः प्रकीर्तिताः।।**

इति व्यभिचारिणः।

**स्मितमथ हसितं विहसितमुपहसितापहसितातिहसितमिति।**
**द्वौ द्वौ भेदौ स्यातामुत्तममध्याधमप्रकृतेः।।**

---

१. मम मरणमनङ्गं मन्मथं वर्द्धयन्ती
शिशिरशल्लके मे निद्रया प्रक्षिपन्ती।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
मम वशमनुयाता रावणस्येव कुन्ती।।इति च्छाया।

**ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः।**
**अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत्।।**
**उत्फुल्लानननेत्रं गण्डैर्विहसितैरथ।**
**किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते।।**
**आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा।**
**कालागतं सास्यरागं तद्वै विहसितं भवेत्।।**
**उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम्।**
**निकुञ्चिताङ्गकशिरं तच्चोपहसितं भवेत्।।**
**अस्थानहसितं यच्च साश्रुनेत्रं तथैव च।**
**उत्कम्पिताङ्गकशिरं तच्चापहसितं भवेत्।।**

शोकस्थायिभावः **करुणः।**

**स्त्रीनीचप्रकृतिर्ह्येष शोकव्यसनसम्भवः।**
**धैर्येणोत्तममध्यानां नीचानां रुदितेन च।।**

यथा—

**जोच्चिअ जेऊण जमं दिठ्ठो इछासुहं तुए जमलोओ[1]।**
**दछिहसि कहं णु पत्थिअ! एह्निं तं च्चेअ सेसअणसामण्णम्।।**

अत्र रावण आलम्बनम्। तद्दशाविशेषदर्शनमुद्दीपनम्। परिदेवनादिरनुभावः।

**निर्वेदश्चैव चिन्ता च दैन्यं ग्लान्यस्रमेव च।**
**जडता मरणं चैव व्याधिश्च करुणे स्मृताः।।**

इति व्यभिचारिणः।

क्रोधस्थायिभावो **रौद्रः।**

**इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः।**
**शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः।।**

---

१. य इव जित्वा यमं दृष्ट इच्छासुखं यमलोकः।
द्रक्ष्यसि कथं नु पार्थिव! इदानीं तमेवाशेषजनसामान्यम्।।इति च्छाया।

यथा—

**देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः**
**क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहात्।**
**तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे**
**यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः।।**

अत्रापकारक आलम्बनम्। तदपराधज्ञानमुद्दीपनम्। नेत्रारुण्यादिरनुभावः।

**गर्वोऽसूया तथोन्माद आवेगो मद एव वा।**
**क्रोधश्च जडता हर्षो रौद्रे तूग्रत्वमेव च।।**

इति व्यभिचारिणः।

उत्साहस्थायिभावो **वीरः**।

**उत्साहाध्यवसायादविषादत्वादविस्मयामोहात्।**
**विविधादर्थविशेषाद्वीररसो नाम सम्भवति।।**

**स्थितिशौर्यवीर्यधैर्यैरुत्साहपराक्रमप्रभावैश्च।**
**वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः।।**

एष दानदयायुद्धधर्मरूपाणामुत्साहोपाधीनां भेदाच्चतुर्द्धा।

**आद्यो यथा—**

**जीवतावधि वनीपकमात्रैरर्थ्यमानमखिलैः सुलभं यत्।**
**अर्थिने परिवृढाय सुराणां किं वितीर्य परितुष्यतु चेतः।।**

**द्वितीयो यथा—**

**स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं प्रसीद।**
**दिनावसानोत्सुकबालवत्सा विमुच्यतां धेनुरियं महर्षेः।।**

**तृतीयो यथा मम—**

**स्थितः सोऽहं मैत्रावरुणिकुशिकापत्यवशगः**
**प्रतीपस्य त्वादृश्यपि नृपदिलीपस्य कुलभूः।**
**चिरादस्माभिः किं न भवदवदानं श्रुतचरं**
**मनोऽध्यक्षीकर्त्तुं तव विभवमुत्कण्ठितमतः।।**

श्रीरामस्य खरं प्रत्युक्तिः।

**चतुर्थो यथा—**

**यत्किञ्चनेदं वित्तमस्यां पृथिव्यां यद्देवानां त्रिदशानां परं यत्।**
**प्राजापत्यं त्रिदिवं ब्रह्मलोकं नाधर्मतः सञ्जय! कामयेऽहम्।।**

अत्र तत्तद्विषया आलम्बनानि, अनुभावाः स्पष्टाः।

**असम्मोहस्तथोत्साह आवेगो हर्ष एव च।**
**अमर्षप्रतिबोधश्च क्रोधोऽसूया धृतिस्तथा।**
**गर्वश्चैव वितर्कश्च मतिश्चैव तथोग्रता।**
**अमर्षोऽथ मदश्चैव वीरे भावा भवन्ति हि।।**

इति व्यभिचारिणः।

रौद्रे क्रोधः स्थायी, अत्र तु व्यभिचारीति भेदः। न च विनिगमकाभावः, प्ररूढत्वाप्ररूढत्वयोस्तथात्वात्। तत्त्वं च बह्वल्पविभाजकत्वमित्यभियुक्ताः। तथा च मुनिनोक्तम्—

**सर्वेषां समवेतानां रूपं यस्य भवेद्बहु।**
**स मन्तव्यो रसस्थायी शेषाः सञ्चारिणो मताः।।**

**रत्नाकरेऽप्युक्तम्—**

**रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः।**
**स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः।।**

एवमन्यत्राप्यूह्यम्।

भयस्थायिभावो **भयानकः**।

यथा—

**घोरां नारकपालकुण्डलवतीं विद्युच्छटां दृष्टिभि-**
**र्मुञ्चन्तीं विकरालदृष्टिमनलज्वालापिशङ्गैः कचैः।**
**दंष्ट्राचन्द्रकलाङ्कुरान्तरललज्जिह्वां महाभैरवीं**
**पश्यन्त्या इव मे मनः कदलिकेवाद्याप्यहो वेपते।।**

इह भयहेतुरालम्बनं ग्रहणोद्यमादिरुद्दीपनं मुखशोषादयोऽनुभावाः।

**चरणहृदयकम्पैः स्तम्भनजिह्वाविलेहमुखशोषैः।**
**स्त्रस्तसविषाणगात्रैरस्याभिनयः ससन्त्रासैः।।**

**स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा।**
**त्रासश्च मरणं चैव वैवर्ण्यं च भयानके।।**

इति व्यभिचारिणः।

जुगुप्सास्थायिभावो **बीभत्सः**। यथा—

**अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-**
**व्यक्तोत्तंसभृतः पिनद्धशिरसो हृत्पुण्डरीकस्त्रजः।**
**एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-**
**न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः।।**

**अनभिमतदर्शनेन च गन्धरसस्पर्शशब्ददोषैश्च।**
**उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति।।**

**मुखनेत्रविकूणनया नासाप्रच्छादनावनमितास्यैः।**
**अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः।।**

**अपस्मारस्तथोन्मादो विषादो मद एव च।**
**मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रिताः।।**

इति व्यभिचारिणः।

विस्मयस्थायिभावोऽद्भुतः। यथा—

**आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभान्**
**सङ्गीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन् क्षणम्।**
**सद्यो विस्मृतसिंहलेन्द्रविभवः कक्षाप्रदेशेऽप्यहो**
**द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाहं कृतः।।**

अत्र विभावादयः स्पष्टाः।

**यत्त्वतिशयार्थयुक्तं वाच्यं शिल्पं च कर्मरूपं च।**
**तत्सम्बद्धैरर्थैः रसोऽद्भुतो नाम विज्ञेयः।।**

**स्पर्शग्रहणोल्लासितैर्हाहाकारैश्च साधुवादैश्च।**
**वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य।।**

**स्तम्भः स्वेदोऽथ मोहश्च रोमाञ्चो विस्मयस्तथा।**
**आवेगो जडता हर्षो मूर्च्छा चैवाद्भुताश्रयाः।।**

इति व्यभिचारिणः।

काव्ये **शान्तो**ऽपि रसोऽनुभवसिद्धत्वात्। तत्र निर्वेदः स्थायिभावः। तदुक्तम्—

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।**
**रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः।।**

अत एवायं नाट्ये न सम्भवति गीतवाद्यादेस्तद्विरोधित्वात्, अन्ये तु नाट्येऽपि स युक्तः। तद्गीतवाद्यादेस्तद्विरोधित्वानङ्गीकारात्। विषयचिन्तासामान्यस्य तद्विरोधित्वे पुराणश्रवणादेस्तद्विरोध्युद्दीपनस्यापि विरोधित्वप्रसङ्गात्। यत्तु—

**शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।**
**अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते।।** इति।

तदप्यनुपयुक्तम्। नटे रसाभिव्यक्तेरनङ्गीकारात्। सामाजिकानां शमवत्त्वे तदभिव्यक्तौ बाधकाभावात्। नटे भयक्रोधाद्यभावेऽपि तल्लिङ्गानामिव शिक्षाभ्यासपाटवेन शान्तरसलिङ्गानामप्यभिनयोपपत्तेः। न चास्य रसत्वे सूत्रकारानुमतेरभावः, निर्वेदस्यामङ्गलप्रायस्य प्रथमनिर्देशो मुख्यत्वेन स्थायित्वलाभार्थ इति **काव्यप्रकाश**कारादिभिरुक्तत्वात्।

ननु निर्वेदस्य स्वावमाननरूपस्य स्थायित्वानुपपत्तिः, शान्तस्य सर्वविषयपरिहारजनितात्ममात्रविश्रामानन्दरूपत्वात्।

**यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।**
**तृष्णाक्षयसुखस्यैते कलां नार्हन्ति षोडशीम्।।**

इत्युक्तेः। एतेन सर्ववृत्तिविरामोऽस्य स्थायीत्यपि निरस्तम्। अभावस्य तदयोगात्। न च चित्तव्यापारनिवृत्तिरूपत्वाच्छमस्यापि कथं स्थायित्वमिति वाच्यम्। निरीहावस्थायामात्मविश्रान्तेरेवात्र शमपदार्थत्वादिति **काव्यप्रदीपा**दिभिर्निरूपितत्वात्। एवञ्च कथं सूत्रसम्मतिलाभ इति चेत्, सत्यम्। तत्र निर्वेदो नाम दारिद्र्यन्यक्कारव्याध्यपमानोत्क्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैरुत्पद्यत इति सूत्रकारेणोक्तत्वात्, नित्यानित्यवस्तुविवेकरूपतत्त्वज्ञानजन्यस्य च निर्वेदस्य शृङ्गारादौ व्यभिचारित्वानुपपत्त्या तत्स्थायित्वस्य तदनुमतत्वात्। तदुक्तम्—

**स्थायी स्याद्विषयेष्वेव तत्त्वज्ञानाद्भवेद्यदि।**
**इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ।।** इति।

विषयेष्वनुपादेयज्ञानस्य च निर्वेदपदार्थत्वात् 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' इति श्रुत्यादिसिद्धत्वात्। रागाभावमात्रस्य तथात्वे सुषुप्त्यादौ निर्विण्णत्वव्यवहारप्रसङ्गात्। आत्मनिर्विकल्पकस्य च काव्याद्यनुपपाद्यत्वात्। रसस्य विभावादिसमूहालम्बनरूपतायाः सर्वसिद्धत्वात्। यथा—

**अहौ वा हारे वा कुसुमशयने वा दृषदि वा**
**मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा।**
**तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः**
**क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः।।**

केचित्तु निवृत्तौ शान्त इव प्रवृत्तौ मायारसोऽपि युक्तः। तत्र रसोत्पत्तिर्नेति दुर्वचत्वात्। ननु स रतिरेवेति चेत्, मैवम्। स न तावत् शृङ्गार-हास्य-रौद्राणां व्यभिचारी, तद्वैरिणां बीभत्सकरुणाद्भुतानां तत्र सत्त्वात्। नापि बीभत्स-करुणाद्भुतानां तद्वैरिणां शृङ्गारहास्यरौद्राणामपि तत्र सत्त्वात्। न च माया सामान्यरसस्तद्विशेषास्त्वन्य इति वाच्यम्। शान्तस्य बहिर्भावापत्तेः; किन्तु प्रबुद्धमिथ्याज्ञानवासना रसः। मिथ्याज्ञानं स्थायिभावः, भोगार्जकधर्माधर्मा विभावाः, पुत्र-कलत्र-विजय-साम्राज्यादयोऽनुभावाः, विद्युद्वत्कादाचित्कप्रकाशा रत्यादयोऽष्टौ भावास्तत्र व्यभिचारिणः। यथा—

**वाटी लाटीदृगम्भोरुहरभसकरी वापिका कापि कान्ता**
**तल्पं चन्द्रानुकल्पं प्रकटयति मिथः कामिनां कामिनीतम्।**
**रूपं कामानुरूपं मणिमयभवनं बन्धुरं बन्धुरङ्के**
**लोके लोकेश! कस्य त्वमसि न भुवने सर्वदा सर्वदाता।।**

इत्याहुः। तच्चिन्त्यम्। शान्तरसस्याप्यविद्यातत्कार्यान्यतरविषयकत्वेन बहिर्भावस्य शङ्कितुमनर्हत्वात्। मिथ्याज्ञानवासनायाश्च सर्वदापि प्रबुद्धत्वात्। काव्यादिभ्यो जायमानस्य विषयज्ञानमात्रस्य रसत्वापत्तेश्च। तत्र चमत्कारस्याननुभूयमानत्वात्। व्यभिचारिस्थायिभावानां व्यवस्थानुपपत्तेश्चेति दिक्।

**अथ व्यभिचारिणो निरूप्यन्ते। विविधमाभिमुख्येन रसान् प्रति चरन्तीति व्यभिचारिणः। स्थाय्यनुकूलत्वे सति विभावानुभावभिन्नत्वं लक्षणम्। अनुकूलत्वं तु रसव्यञ्जकत्वे सति रसप्रतीतिविषयत्वम्। अतो रसकाव्यवाक्ये भावनायां वा नातिव्याप्तिः। ते च त्रयस्त्रिंशत्। तदुक्तम्—**

**निर्वेदग्लानिशङ्काख्यास्तथासूया मदः श्रमः।**
**आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः।।**

**व्रीडाचपलताहर्षा आवेगो जडता तथा।**
**गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च।।**

**सुप्तं विबोधोऽमर्षश्च अवहित्थं तथोग्रता।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च।।**

**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामभिः।।**

त्रयस्त्रिंशदिति आधिक्यनिरासार्थम्। तेन मात्सर्योद्वेगदम्भेर्ष्याविवेकनिर्णयक्लैव्यक्षमाकुतुकोत्कण्ठाविनयसंशयधार्ष्ट्यानामाधिक्यमनाशङ्क्यम्। मात्सर्यस्यासूयायामुद्वेगस्य त्रासे दम्भस्यावहित्थे ईर्ष्याया अमर्षे विवेकनिर्णययोर्मतौ क्लैब्यस्य दैन्ये क्षमाया धृतौ कुतुकोत्कण्ठयोरौत्सुक्ये विनयस्य लज्जायां संशयस्य तर्के धार्ष्ट्यस्य चापले चान्तर्भावात्। एतेन छलस्य व्यभिचार्यन्तरत्वमिति निरस्तम्। अवहित्थकुक्षावन्तर्भावात्। अवान्तरभेदस्य सतोऽप्यनादरणीयत्वात्। विभागे शास्त्रकारेच्छाया एव नियामकत्वात्।

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।**

तदुक्तम्—

**इष्टजनविप्रयोगाद्दारिद्र्याद्व्याधितस्तथा शोकात्।**
**परवृद्धिं दृष्ट्वा वा निर्वेदो नाम सम्भवति।।**

**वाष्पपरिप्लुतनयनः पुनः पुनः श्वासदीनमुखनेत्रः।**
**योगीव ध्यानपरो भवति हि निर्वेदवान्पुरुषः।।**

यथा—

**सन्तापो हृदये स्मरानलकृतः सम्प्रत्ययं सह्यतां**
**नास्त्येवोपशमो हि सम्प्रति पुनः किं त्वं मुधा ताम्यसि।**
**यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं**
**विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः।।**

**रत्यायासकलाभ्यासाद्ग्लानिर्निष्प्राणतेव या।**

आधिव्याधिजन्यबलहानिजन्यो दु:खविशेष इवशब्दार्थ:। एतेन बलहानिरेव ग्लानिरित्यपास्तम्। नाशस्य भावत्वानुपपत्ते:। न चायं श्रम एवेति वाच्यम्, तद्धेत्वभावादिति **रसगङ्गाधरादयः**। यथा—

**अतितमां समपादि जडाशयं स्मितलवस्मरणेऽपि तदाननम्।**
**अजनि पङ्गुरपाङ्गनिजाङ्गणभ्रमिकणेऽपि तदीक्षणखञ्जनः।।**

**चिन्तावैक्लव्यजनिका शङ्कानिष्टसमुन्नयः।**

उन्नय उत्प्रेक्षा। तदुक्तम्—

**द्विविधा शङ्का कार्या आत्मसमुत्था च परसमुत्था च।**
**या तत्र परसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः।।**

**कश्चित्प्रवेपिताङ्गस्तथोन्मुखो वीक्षते च पार्श्वानि।**
**उरुसज्जमानकण्ठः श्यानास्यः शङ्कितः पुरुषः।।**

यथा मम—

**पुलककुलकञ्चुकवृतं कपोलफलकं विलोकने तस्य।**
**मुग्धे! संवृणु वसनाञ्चलेन दृगवेक्षणेन कृतम्।।**

**परोत्कर्षाक्षमाऽसूया गर्वदौर्जन्यमन्युजा।**

तदुक्तम्—

**परसौभाग्येश्वरतामेधालीलासमुच्छ्रयं दृष्ट्वा।**
**अभिनेतव्याऽसूया कृतापराधा भवेयुश्च।।**

**भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवर्त्तनैश्चित्रैः।**
**गुणनाशनविद्वेषैस्तस्याः कार्यः सदाभिनयः।।**

यथा—

**तच्चापमीशभुजपीडितसारमेव**
**प्रागप्यभज्यत भवांस्तु निमित्तमात्रम्।**
**राजन्यकप्रधनसाधनमस्मदीय-**
**माकर्ष कार्मुकमिदं गरुडध्वजस्य।।**

**सम्मोहानन्दसम्भेदः स्खलदङ्गवचोगतिः।**
**मधुपानादिजो ज्ञेयो मदो विविधभावकृत्।।**

तदुक्तम्—

**त्रिविधस्तु मदः कार्यस्तरुणो मध्यस्तथापकृष्टश्च।**
**करणं पञ्चविधं स्यात्तस्याभिनये प्रयोगविदाम्।।**

**कश्चिन्मत्तो गायति रोदिति कश्चित् तथा हसति कश्चित्।**
**परुषवचनाभिधायी कश्चित्कश्चित्तथा स्वपिति।।**
**उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः।**
**परुषवचनाभिधायी रोदित्यपि वाधमप्रकृतिः।।**
**स्मितमधुरवचनरागो हृष्टतनुः किञ्चिदाकुलितवाक्यः।**
**स्वप्रचारविरुद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः।।**
**स्खलिताघूर्णितनयनः स्रस्तव्याकुलितगात्रविक्षेपः।**
**कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः।।**
**नष्टस्मृतिर्हतगतिश्छर्दितहिक्कादिकैः सुबीभत्सः।**
**गुरुसज्जमानकण्ठो निष्ठीवति चाधमप्रकृतिः।।** इत्यादि।

यथा—

**देइ विलासवईणं सुहे अ दुःक्खे अ पाअपडिअसब्भावा।**
**अणवेक्खिअलज्जाइं सहिव्व वीसत्थजंपिआइं पसण्णा[१]।।**

**श्रमः खेदोऽध्वगत्यादेर्निद्राश्वासादिकृन्मतः।**

तदुक्तम्—

**अध्वगतिव्यायामान्नरस्य सञ्जायते श्रमो नाम।**
**निःश्वासदर्शनस्वेदैस्तस्याभिनयः प्रयोक्तव्यः।।**

अस्य बलसत्त्वेऽपि जायमानत्वाच्छरीरव्यापारजत्वाच्च न ग्लानावन्तर्भावः।

यथा—

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्**
**अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।**
**बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्द्धजाः।।**

---

१. ददाति विलासवतीनां सुखे च दुःखे च पादपतितसद्भावा।
अनपेक्षितलज्जानां सखीव विश्रब्धजल्पितानि प्रसन्ना।।इति च्छाया।

**श्रमादिजन्यमालस्यं पुरुषार्थेष्वनादरः।**

क्रियासु द्वेष इत्यर्थः। असामर्थ्याभावाद्विवेकशून्यत्वाभावाच्च ग्लानिजडताभ्यां भेदः। यथा—

**प्रबुद्धायाः प्रातर्लसदलसदोर्वल्लिवलयं**
**गलन्मल्लीदाम्नः शिथिलकबरीबन्धसमये।**
**प्रियालोके घूर्णन्नयनमसृणस्निग्धमधुरो**
**मुखे जृम्भारम्भो जयति भृशमम्भोरुहदृशः।।**

**दौर्गत्यादेरनौजस्यं दैन्यं मलिनतादिकृत्।**

यथा—

**वेगं करोति तुरगस्त्वरितं प्रयातुं**
**प्राणव्ययान्न चरणास्तु तथा वहन्ति।**
**सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः**
**खिन्नास्ततो हृदयमेव पुनर्विशन्ति।।**

**ध्यानं चिन्ता हिताप्राप्तेः सन्तापादिकरी मता।**

तदुक्तम्—

**सोच्छ्वसितैर्निःश्वासैः सन्तापैश्चैव शून्यहृदयतया।**
**अभिनेतव्या चिन्ता मुदा विहीनैरधृत्या च।।**

यथा—

**मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिणो**
**भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम्।**
**अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे**
**कल्याणं विदधातु सा भगवती नीतिर्विपर्येतु वा।।**

न चायं वितर्क एवेति वाच्यम्। किं भविष्यतीति चिन्तायाः पूर्वं पश्चाद्वा तदुपपत्तेः। 'वितर्कोऽस्याः पूर्वक्षणे पाश्चात्त्ये वोपजायते' इत्यभियुक्तोक्तेः।

**मोहो विचित्तताभीतिदुःखावेगानुचिन्तनैः।**

तदुक्तम्—

**अस्थाने तस्करान्दृष्ट्वा त्रासनैर्वा पृथग्विधैः।**
**तत्प्रतीकारशून्यस्य मोहः समुपजायते।।**

**व्यसनाभिघातपूर्ववैरानुस्मरणजो भवति मोहः।**
**सर्वेन्द्रियसम्मोहात्तस्याभिनयः प्रयोक्तव्यः।।**

वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोहः। शून्यताव्यवहिता सेति केचित्।
यथा—

**निवृत्तिः प्रत्येकं भवति करणानां स्वविषया-**
**त्तथा सर्वाण्यत्र स्मृतिजनकतामेव दधति।**
**अतस्मिंस्तद्भावं भजति च समस्तं त्वपरथा**
**कथङ्कारं सर्वं परिणमति कान्तामयमिदम्।।**

**स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते।**

तदुक्तम्—

**अन्यतत्त्वमतिक्रान्तं यथामति विभावितम्।**
**विस्मृतं च यथावृत्तं स्मरेयुः प्रीतमानसाः।।**

**स्वास्थाभ्याससमुत्था श्रुतिदर्शनसम्भवा स्मृतिर्निपुणैः।**
**शिर उद्वाहनकम्पैर्भ्रूक्षेपैश्चाभिनेतव्या।।**

यथा—

**ण ट्ठाणाहि तिलन्तरं विचलिआ सुत्था णिअंवत्थली**
**थोउव्वल्लवलीतरङ्गमुअरं कण्ठोतिरिच्छट्ठिओ।**
**वेणीए उण आणणेन्दुबलणे लद्धं थणालिङ्गणं**
**जादा तीअ चउव्विहा तणुलदा तं संचलन्तीअ मे[1]।।**

**अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता धृतिः।**
**सौहित्यवदनोल्लाससहासप्रतिभादिकृत्।।**

तदुक्तम्—

**प्राप्तानामुपभोगः शब्दरसस्पर्शगन्धानाम्।**
**अप्राप्तानामनुशोचनं च न भवेद् धृतिः सा तु।।**

---

१. न स्थानाद्धि तिलान्तरं विचलिता सुस्था नितम्बस्थली
स्तोकोद्वेलबलीतरङ्गमुदरं कण्ठोऽतितिर्यक्स्थितः।
वेण्या पुनराननेन्दुवलने लब्धं स्तनालिङ्गनं
जाता तस्याश्चतुर्विधा तनुलता तत् सञ्चरन्तीव मे।।इति च्छाया।

विज्ञानशौचसमुद्भवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः।
भयशोकविषादाद्यै रहिता तु सदा प्रयोक्तव्या।।

यथा—

मुहपेच्छओ पई से सावि हु सविसेसदंसणुम्मत्ता।
दोवि कहत्था पुहइं अमहिलपुरिसं व मण्णन्ति[१]।।

सङ्कोचश्चेतसो व्रीडा वैवर्ण्याधोमुखत्वकृत्।

तदुक्तम्—

लज्जाधोगूढमुखो भूमिं च लिखन्नखांश्च परिकृन्तन्।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात्।।

यथा—

णिहुअणसिप्पं तह सारिआइ उल्लाविअह्य गुरुपुरओ।
जह तं वेलं माए ण आणिमो कहं वच्चामो[२]।।

वाक्पारुष्यकरी चित्तस्यावस्था चापलं मता।

वाक्पारुष्यमिति वधबन्धनादेरप्युपलक्षणम्। तदुक्तम्—

अविमृष्टं यत्कार्यं पुरुषोऽज्ञानात्समाचरति।
अविनिश्चितकारित्वात्स तु खलु चपलो बुधैर्ज्ञेयः।।

यथा—

कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः।
उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श।।

मनःप्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः।

यथा—

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि सुमुखि! त्वम्।
उपरागान्ते शशिनः समुद्गतो रोहिणीयोगः।।

आवेगो राजविद्रावरत्यादेः सम्भ्रमो मतः।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः।।

---

१. मुखप्रेक्षकः पतिस्तस्याः सापि खलु सविशेषदर्शनोन्मत्ता।
द्वावपि कृतार्थौ पृथिवीममहिलापुरुषामिव मन्येते।।इति च्छाया।

२. निधुवनशिल्पं तथा सारिकयोल्लापिता स्म गुरुपुरतः।
यथा तस्यां वेलायां मातर्न जानीमः कथं वर्तामहे।।इति च्छाया।

तदुक्तम्—

**इत्येषोऽष्टविधो ज्ञेय आवेगः सम्भ्रमात्मकः।**
**स्थैर्य्येणोत्तममध्यानां नीचानां चोपसर्पणात्।।**

अष्टविधः, उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियश्रवणाप्रियश्रवणव्यसनभेदात्। एवञ्च सिंहाभियोगादेरप्युपलक्षणम्। यथा—

**अस्थानगामिभिरलङ्करणैरुपेता भूयः पदस्खलितनिह्नुतिरप्रसन्ना।**
**वाणीव कापि कुकवेर्मधुपानमत्ता गेहान्निपातबहुलैव विनिर्जगाम।।**

**अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः।**
**अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र।।**

मोहे चाक्षुषादेरनुत्पत्तिरेव। इह तु तदुत्पत्तावपि प्रकारविशेषावगाहनं बाहुल्याभावश्चेति विशेषः। यथा—

**पेछइअ लद्धलक्खं दीहं णीससइ सुण्णअं हसइ।**
**जह जंपइअ फुडत्थं तह से हिअअट्ठिअं किंपि[१]।।**

**गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मतः।**
**सविलासाङ्गवीक्षाविनयावज्ञादिकृत्तु सः।।**

यथा—

**धृतायुधो यावदहं तावदन्यैः किमायुधैः।**
**यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यते।।**

**प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसङ्क्षयः।**
**निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः।।**

तदुक्तम्—

**कार्यानिस्तरणकृतश्चौर्याभिग्रहणराजदोषाद्यैः।**
**दैवादिष्टो योऽर्थस्तदसम्प्राप्तौ विषादः स्यात्।।**

यथा—

**मम प्राणाधिके तस्मिन्नङ्गनामीश्वरे हते।**
**उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात! का कथा।।**

---

१. प्रेक्षते लब्धलक्षं दीर्घं निःश्वसिति शून्यं हसति।
यथा जल्पति स्फुटार्थं तथास्या हृदयस्थितं किमपि।।इति च्छाया।

कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसम्भ्रमैः।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः।।

यथा—

श्वस्तस्याः प्रियमाप्तुमुद्धुरधियो धीराः सृजन्त्या रया-
न्नम्रोन्नम्रकपोलपालिपुलकैर्वेतस्विनीरश्रुणः।
चत्वारः प्रहराः स्मरार्त्तिभिरभूत्सा या क्षपा दुःक्षपा
तत्तस्याः कृपयाखिलैव विधिना रात्रिस्त्रियामा कृता।।

मनःसम्मीलनं निद्रा चिन्तालस्यश्रमादिभिः।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसनादयः।।

तदुक्तम्—

आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च।
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति।।
तां मुखगौरवगात्रप्रविलोलनयननिमीलनजडत्वैः।
जृम्भणगात्रविमर्द्दैरनुभावैरभिनयेत्प्राज्ञः।।

यथा—

निःश्वासोऽस्य न शङ्कितः सुविशदस्तल्पान्तरे वर्त्तते
दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला।
गात्रं स्रस्तशरीरसन्धि शिथिलं शय्याप्रमाणाधिकं
दीपं वापि न धर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि।।

मनःक्षेपस्त्वपस्मारो भूतावेशादिसम्भवः।

तदुक्तम्—

भूतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यगृहगमनात्।
कालान्तरातिपातादशुचेश्च भवत्यपस्मारः।।
सहसा भूमौ पतनं प्रवेपनं वदनफेनमोक्षश्च।
निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारे।।

न च व्याधित्वादेवास्य सङ्ग्रहे पृथगुपादानवैयर्थ्यमिति बाच्यम्। बीभत्सभयानकयोरेवास्य व्यभिचारित्वमित्येतदर्थत्वात्। यथा मम—

तदुक्तम्—

**इत्येषोऽष्टविधो ज्ञेय आवेगः सम्भ्रमात्मकः।**
**स्थैर्य्येणोत्तममध्यानां नीचानां चोपसर्पणात्।।**

अष्टविधः, उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियश्रवणाप्रियश्रवणव्यसनभेदात्। एवञ्च सिंहाभियोगादेरप्युपलक्षणम्। यथा—

**अस्थानगामिभिरलङ्करणैरुपेता भूयः पदस्खलितनिह्नुतिरप्रसन्ना।**
**वाणीव कापि कुकवेर्मधुपानमत्ता गेहान्निपातबहुलैव विनिर्जगाम।।**

**अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः।**
**अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र।।**

मोहे चाक्षुषादेरनुत्पत्तिरेव। इह तु तदुत्पत्तावपि प्रकारविशेषावगाहनं बाहुल्याभावश्चेति विशेषः। यथा—

**पेछइअ लद्धलक्खं दीहं णीससइ सुण्णअं हसइ।**
**जह जंपइअ फुडत्थं तह से हिअअट्ठिअं किंपि[1]।।**

**गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मतः।**
**सविलासाङ्गवीक्षाविनयावज्ञादिकृत्तु सः।।**

यथा—

**धृतायुधो यावदहं तावदन्यैः किमायुधैः।**
**यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यते।।**

**प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसङ्क्षयः।**
**निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः।।**

तदुक्तम्—

**कार्यानिस्तरणकृतश्चौर्याभिग्रहणराजदोषाद्यैः।**
**दैवादिष्टो योऽर्थस्तदसम्प्राप्तौ विषादः स्यात्।।**

यथा—

**मम प्राणाधिके तस्मिन्नङ्गानामीश्वरे हते।**
**उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात! का कथा।।**

---

१. प्रेक्षते लब्धलक्षं दीर्घं निःश्वसिति शून्यं हसति।
यथा जल्पति स्फुटार्थं तथास्या हृदयस्थितं किमपि।।इति च्छाया।

कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसम्भ्रमैः।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः।।

यथा—

श्वस्तस्याः प्रियमाप्तुमुद्धुरधियो धीराः सृजन्त्या रया-
न्नम्रोन्नम्रकपोलपालिपुलकैर्वेतस्विनीरश्रुणः।
चत्वारः प्रहराः स्मरार्त्तिभिरभूत्सा या क्षपा दुःक्षपा
तत्तस्याः कृपयाखिलैव विधिना रात्रिस्त्रियामा कृता।।

मनःसम्मीलनं निद्रा चिन्तालस्यश्रमादिभिः।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसनादयः।।

तदुक्तम्—

आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च।
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति।।
तां मुखगौरवगात्रप्रविलोलनयननिमीलनजडत्वैः।
जृम्भणगात्रविमर्द्दैरनुभावैरभिनयेत्प्राज्ञः।।

यथा—

निःश्वासोऽस्य न शङ्कितः सुविशदस्तल्पान्तरे वर्त्तते
दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला।
गात्रं स्रस्तशरीरसन्धि शिथिलं शय्याप्रमाणाधिकं
दीपं वापि न धर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि।।

मनःक्षेपस्त्वपस्मारो भूतावेशादिसम्भवः।

तदुक्तम्—

भूतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यगृहगमनात्।
कालान्तरातिपातादशुचेश्च भवत्यपस्मारः।।
सहसा भूमौ पतनं प्रवेपनं वदनफेनमोक्षश्च।
निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारे।।

न च व्याधित्वादेवास्य सङ्ग्रहे पृथगुपादानवैयर्थ्यमिति बाच्यम्। बीभत्सभयानकयोरेवास्य व्यभिचारित्वमित्येतदर्थत्वात्। यथा मम—

वेगादुत्पत्य भूमौ विहितनिपतनाः पाण्डुरत्वं वहन्त्यः
फेनैर्विस्फार्यमाणैर्ध्वनिभिरनिभृतैर्भीतिमुद्भावयन्त्यः।
तिर्यक्पश्चात्पुरस्तादपि पवनवशादव्यवस्थं व्रजन्त्यः
सद्यो नद्यो दुरीक्षाघनसमयमयोद्भूतभूताभिभूताः।।

स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।
कोपावेगभयग्लानिसुखदुःखादिकारकः।।

यथा श्रीरुद्रचन्द्रदेवानाम्—

पान्थः स्वप्नदशां गतः प्रियतमामालिङ्ग्य वक्त्रासवं
पातुं यावदियेष तावदसमैर्मेघस्वनैर्बोधितः।
प्रागङ्के शयने ततोऽवनितले पर्येषयन्प्रेयसीं
भूतावेशमितः किलेति [1]समयासीनैर्जनैः स्तम्भितः।।

निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः।
जृम्भाङ्गभङ्गनयनोन्मीलनाङ्गावलोककृत्।।

तदुक्तम्—

आहारापरिणामाच्छब्दस्पर्शादिभिश्च सम्भूतः।
प्रतिबोधस्त्वभिनयो जृम्भणपरिवेदनाक्षिपरिमर्दैः।।

यथा—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः।
नाङ्गाङ्गं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः।।

अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता।
तत्र स्वेदशिरःकम्पनेत्ररागाङ्गविक्रिया:।।

तदुक्तम्—

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः।
नृणामुत्साहसम्पन्नो ह्यमर्षो नाम जायते।।

---

१. समयासीनैः समीपोपविष्टैरित्यर्थः।

उत्साहाध्यवसानाभ्यामधोमुखविचिन्तनैः।
शिरःप्रकम्पस्वेदाद्यैस्तं प्रयुञ्जीत नाट्यवित्।।

यथा—

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं किन्न भवताम्।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे।।

लज्जाद्यैर्विक्रियायोगादवहित्थात्मविक्रिया।
व्यापारान्तरसङ्गित्ववदनानमनादिकृत्।।

तदुक्तम्—

धार्ष्ट्यजैह्म्यादिसम्भूतमवहित्थं भयात्मकम्।
तच्चाङ्गाभिनयैः कार्यं याति चोत्तरभाषणात्।।

यथा—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
मा गा इत्यवरुद्धया यदपि सा सासूयमुक्ता सखी
तत्सर्वं किल मत्परायणमहो कामी स्वतां पश्यति[1]।।

अधिक्षेपावमानाद्यैश्चेतश्चण्डत्वमुग्रता।
अत्र स्वेदशिरःकम्पतर्जनाताडनादयः।।

यथा—

निर्वीर्यं गुरुशापभाषणवशात्किं मे तवेवायुधं
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।
जातोऽहं स्तुतिवंशकीर्त्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण किम्।।

श्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः।
स्मेरता धृतिसन्तोषौ बहुमानस्तथात्मनि।।

---

१. अत्र शकुन्तलानिष्ठमवहित्थं न तु राजनिष्ठम्।

यथा—

**भव हृदय सावधानं सम्प्रति सन्देहनिर्णयो जातः।**
**आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्।।**
**विरहादेर्मनस्तापो व्याधिर्दुःस्थाङ्गतादिकृत्।**

ज्वरोऽत्र सशीतः सदाहश्च। काव्येषु द्वितीय एव। तस्य शीताभिलाषादयोऽनुभावाः। यथा—

**विसव्व विसकन्दली विसहरव्व हारच्छडा**
**विसग्गिमिव अप्पणा किरइ तालवेंटाणिलो।**
**तहाअ करणिग्गअं जलइ जंतधाराजलं**
**न चंदणमहो सही हरइ देहदाहं अ मे[1]।।**
**सन्निपातग्रहादिभ्य उन्मादश्चित्तविभ्रमः।**

तदुक्तम्—

**इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात्।**
**विविधाच्चित्तविकारादुन्मादो नाम सम्भवति।।**
**अनिमित्तहसितरुदितोपविष्टगीतप्रधावितोत्क्रुष्टैः।**
**अन्यैर्विकारजातैरुन्मादं सम्प्रयुञ्जीत।।**

अस्य व्याधित्वेऽपि पृथगुपादानं व्याध्यन्तरापेक्षया वैचित्र्यविशेषसूचनार्थम्। यथा—

**अवलंवह मासंकह माइगहलंघिआ परिब्भमइ।**
**अत्तत्थगज्जिउब्भंतसुण्णहिअआ पहिअजाआ[2]।।**
**रोगादिभिः प्रागवस्था मरणस्य मृतिर्भवेत्।**

---

१. विषमिव विषकन्दली विषधर इव हारच्छटा
विषाग्निमिवात्मना किरति तालवृन्तानिलः।
तथा च करनिर्गतं ज्वलति यन्त्रधाराजलं
न चन्दनमहो सखि! हरति देहदाहं च मे।।इति च्छाया।

२. अवलम्बत माशङ्कत मातृग्रहलङ्घिता परिभ्रमति।
अत्यर्थगर्जितोद्भ्रान्तशून्यहृदया पथिकजाया।।इति च्छाया।

मुख्यस्य भावत्वानुपपत्तेः। यथा—

**सञ्जीवणोसढं विअ सुहस्स रक्खइ अणण्णवावारा।**
**सासूणवब्भदंसणकंठट्ठिअजीविअं सोह्णम्[1]।।**

केचित्तु अत्र करुणं पठन्ति। तदयुक्तम्। दुष्टप्रहाणेच्छारूपतया चित्तवैक्लव्यरूपेण शोकेनैव गतार्थत्वाद् दयावीरे स्थायित्वाच्च। न चान्यत्र सञ्चारित्वदर्शनार्थमत्रोपादानमिति वाच्यम्। रत्यादेरपि तथात्वात्।

**शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः।**
**शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।।**

इति **काव्यप्रदीपादयः**।

**औत्पातिकैर्मनःक्षोभस्त्रासः कम्पादिकारकः।**
**पूर्वापरविचारोत्थं भयं त्रासात्पृथग्भवेत्।।**

यथा—

**रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-**
**त्कम्पोऽल्पोऽप्यत्र पीनस्तनभरित उरः क्षिप्तहारं दुनोति।**
**ऊर्वोः स्तम्भेऽपि जाते पृथुजघनभराद्वेपथुर्वर्द्धतेऽस्या**
**वात्या खेदं मृगाक्ष्याः सुचिरमवयवैर्दत्तहस्ता करोति।।**
**तर्को विचारः सन्देहाद्भ्रूशिरोऽङ्गुलिनर्त्तकः।**

यथा—

**भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना**
**किं चाणक्यनिराकृतेन कृतिना मौर्येण सन्धास्यते।**
**स्थैर्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवे-**
**दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति।।**

एवं चित्तवृत्तिविशेषरूपान् रसविशेषव्यवस्थितान् व्यभिचारिणो निरूप्य शारीराः सर्वसाधारणाः सात्त्विका निरूप्यन्ते।

**ये त्विमे सात्त्विका भावा नानाभावसमाश्रयाः।**
**रसेषु तेषु सर्वे ते विज्ञेया नाट्ययोक्तृभिः।।**

---

१. सञ्जीवनौषधमिव सुखस्य रक्षत्यनन्यव्यापारा।
साश्रुनवाभ्रदर्शनकण्ठस्थितजीवितं सोष्णम्।।इति च्छाया।

इति मुनिनोक्तत्वात्। ते चाष्टभेदा:। तदुक्तम्—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।**
**वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः।।**

एवञ्च जृम्भितस्य नवमभेदत्वमनुपादेयम्। महर्षिकृतविभागविरोधात्। अन्यथा कटाक्षादीनामपि तदापत्तेः। यत्तु जृम्भायाः पुरुषेच्छानधीनत्वाद्वैषम्यमिति, तच्चिन्त्यम्। रसभावादिदृष्टीनामपि मनोविकारमात्रसाध्यत्वात्। तत्र—

**हर्षभयरोगविस्मयविषादमदरोषसम्भवः स्तम्भः।**
**निश्चेष्टो निष्प्रकम्पश्च स्थितशून्यजडाकृतिः।**
**निःसंज्ञः स्तब्धगात्रश्च स्तम्भं त्वभिनयेद्बुधः।।**

यथा—

**स्तम्भस्तथालम्भितमां नलेन भैमीकरस्पर्शमुदः प्रसादः।**
**कन्दर्पलक्ष्यीकरणार्पितस्य स्तम्भस्य दम्भं स चिरं यथाऽऽपत्।।**

**श्रमादिना दृश्यतामापन्नं गात्रजलं स्वेदः।**
**व्यजनग्रहणैर्वापि स्वेदापनयनेन च।**
**स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः।।**

यथा—

**प्रारब्धनिधुवनैव स्वेदजलं कोमलाङ्गि! किं वहसि।**
**ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु।।**

**स्पर्शभयगीतहर्षक्रोधाद्रोगाच्च रोमाञ्चः।**
**मुहुः कण्टकितत्वेन तथाङ्गाकुञ्चनेन च।**
**रोमाञ्चस्त्वभिनेयोऽसौ गात्रसंस्पर्शनेन च।।**

यथा—

**जे णअस्स तिहुस्णस कंटआ जे कदंबकुसुमस्स केसरा।**
**अज्ज तुज्झ करफंससङ्गिणो ते हुवंति मह अंगणिग्गदा[१]।।**

---

१. ये नलस्य तीक्ष्णस्य कण्टका ये कदम्बकुसुमस्य केशराः।
अद्य तव करस्पर्शसङ्गिनस्ते भवन्ति मम अङ्गनिर्गताः।।इति च्छाया।

स्वरभेदः—

**भयहर्षक्रोधजरारौक्ष्यरोगमदजनितः।**
**स्वरभेदस्तथा चैव भिन्नगद्गदविस्वरैः।।**

यथा मम—

**निपीतवत्या मधु सन्दधानः प्रसूनधन्वानममन्दभावः।**
**क्षणेन मन्दाक्ष इवेन्दुमुख्याः स्वरोऽपि भङ्गं विभराम्बभूव।।**
**शीतभयहर्षरोगस्पर्शजरासम्भवः कम्पः।**
**वेपनात्स्फुरणात्कम्पाद्वेपथुं सम्प्रयोजयेत्।।**

वेपनमवयवैकदेशस्य परिस्पन्दः, स्फुरणं निरवच्छिन्नोऽवयवस्पन्दः, कम्पः सकलशरीरस्पन्द इति भेदः। यथा—

**तूलेन तस्यास्तुलना मृदोस्तु कम्पास्तु सा मन्मथबाणवातैः।**
**चित्रीयितं तत्तु नलो यदुच्चैरभूत्स भूभृत्पृथुवेपथुस्तैः।।**
**शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम्।**
**मुखवर्णपरावृत्त्या नाडीपीडनयोगतः।**
**वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम्।।**

यथा—

**कुसुमचापजतापसमाकुलं कमलकोमलमैक्ष्यत तन्मुखम्।**
**अहरहर्वहदभ्यधिकाधिकां रविरुचिग्लपितस्य विधोर्विधाम्।।**

नेत्रजलमश्रु। स्वेदलक्षणे नेत्रभिन्नत्वमवयवे विशेषणं बोध्यम्।

**आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात्।**
**अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदस्रम्।।**

यथा—

**वाष्पाम्भसा मृगदृशो विमलः कपोलः**
**प्रक्षाल्यते सपदि राजत एव यस्मिन्।**
**गण्डूषपेयमिव कान्त्यमृतं पिपासु-**
**रिन्दुर्निवेशितमयूखमृणालदण्डः।।**

**चेष्टानिरोधः प्रलयः।**

चेष्टा च प्रयत्नवदात्मसंयोगजन्या शरीरक्रिया। वाय्वादिसंयोगजन्यायां मृतशरीरक्रियायामतिव्याप्तिनिरासाय जन्यान्तम्। ऊर्ध्वज्वलनादिरूपाग्न्यादिक्रिया-वारणाय शरीरेति। यथा—

**वावारविसम्वाअं सअलावअवाण कुणइहअ लज्जा।**
**सवणाण उणो गुरुअणपुरोवि ण णिरुंभइ णिओओ[1]।।**

**।। इति सात्त्विकभावनिरूपणम्।।**

प्रसङ्गाद्यौवनकालीनभावा अपि निरूप्यन्ते। तत्र **भरतः**—

**देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः।**
**भावात्समुत्थितो हावो हावाद्धेला समुत्थिता।।**

अनभिव्यक्तो मानसो विकारो भावः, किञ्चिदभिव्यक्तो हावः, स्फुटतरमभिव्यक्तो हेलेति विवेकः।

**बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत्।**
**भाव इत्युच्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः।।**

इति **हलायुधोक्तेः**,

**रसाभिज्ञानयोग्यत्वं भाव इत्यभिधीयते।**
**ईषद्दृष्टविकारः स्याद्भावो हावः प्रकीर्त्तितः।।**
**सुव्यक्तविक्रियो भावो हेलेति परिकीर्त्यते।।**

इति **विद्यानाथोक्तेश्च**। हावजन्यचेष्टाविशेषाश्च तदनुमापकतया हावशब्देनोच्यन्ते। तदुक्तम्—

**लीलाविलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्।**
**मोट्टायितं कुट्टमितं विव्वोको ललितं तथा।।**
**विहृतं चेति सम्प्रोक्ता दश स्त्रीणां स्वभावजाः।।'**

**तत्र भावो यथा—**

**कथाप्रसङ्गेषु मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते।**
**द्रुतं विधूयान्यदभूयतानया मुदा तदाकर्णनसज्जकर्णया।।**

---

१. व्यापारविसंवादं सकलावयवानां करोतीह च लज्जा।
श्रवणयोः पुनर्गुरुजनपुरोऽपि न निरुध्यते नियोगः।।इति च्छाया।

हावो यथा—

निराकूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना सङ्गमयितुम्।
उपादत्ते नो वा रहयति न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति।।

हेला यथा—

विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन।।

चेष्टासु आद्यचतुष्टयं नवमं च शारीराणि, षष्ठसप्तमाष्टमदशमान्यान्तराणि, पञ्चममुभयसङ्कीर्णमिति विवेकः।

वागङ्गालङ्कारैः श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः।
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः।।

यथा मम—

निर्मायाभरणं मृणालवलयानाशीविषाणां गणा-
न्मूर्द्धन्यप्युपधाय केतकदलं खण्डं सुधादीधितेः।
आलेपं हिमबालुकाभिरुररीकृत्याभितो भूतिभि-
स्तन्वानात्मनि नीललोहिततुलां देवी प्रदेयान्मुदम्।।

स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात्।।

यथा मम—

कर्णोत्तंसपरिभ्रमन्मधुकरव्यासेधलक्ष्योल्लस-
त्पाणिव्यापृतिजन्यकर्मजमिथोयोगक्वणत्कङ्कणा।
हासारम्भभवद्विभागमधुरं मन्दं दशन्ती रदै·
श्रोत्रोपान्तविजृम्भमाणनयनं धन्यं वधूर्वीक्षते।।

माल्याच्छादनभूषणविलेपनानामनादरन्यासः।
स्वल्पोऽपि परां शोभां जनयति यः सा तु विच्छित्तिः।।

यथा मम—

बाले! किं वलयैरलं कुवलयैर्माल्यत्वमापादितैः
को वा स्यादनया गुणो रसनया तारेण हारेण किम्।
नीतेन श्रवणावतंसपदवीमेव प्रवालेन ते
सर्वत्रावयवे शिरीषजनुषा कान्तिर्निरीषत्कृता।।
विविधानामङ्गानां वागङ्गाहार्यसत्त्वयुक्तानाम्।
मदरागहर्षजनितो व्यत्यासो विभ्रमः प्रोक्तः।।

यथा—

सितं वसनमर्पितं वपुषि नीलचोलभ्रमा-
न्मया मृगमदाशया मलयजद्रवः सेवितः।
करेण परिबोधितः स्वजनशङ्कया दुर्जनः
परं परमपुण्यतः सखि! न लम्बिता देहली।।
स्मितहसितरुदितभयरोषमोहदुःखश्रमाभिलाषाणाम्।
सङ्करकरणं हर्षादसकृत्किलकिञ्चितं प्रोक्तम्।।

यथा—

आज्ञा काकुर्याञ्चाक्षेपो हसितं च शुष्करुदितं च।
इति निधुवनपाण्डित्यं तस्या ध्यायन्न तृप्यामि।।
इष्टजनस्य कथायां लीलाहेलाभिदर्शने चापि।
तद्भावभावनाकृतमुक्तं मोट्टायितं नाम।।

यथा—

मत्प्रस्तावमकुर्वति प्रियसखीवृन्देऽपि मन्दायते
प्रस्तावे सति निन्दिकैव पुलकप्राचुर्यपर्याकुला।
ध्यायत्येव हि मां रहः पुनरहो दृष्टापि नालोकते
बाले! मानकलां बिभर्त्ति विपुलां प्रेमा तु हेमाचलः।।
केशस्तनाधरग्रहणेष्वतिहर्षसम्भ्रमोत्पन्नम्।
कुट्टमितं विज्ञेयं सुखेऽपि दुःखोपचारेण।।

यथा—

पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः।
कामिनः स्म कुरुते करभोरुर्हारि शुष्करुदितं च रतेषु।।
इष्टानां भावानां प्राप्तावभिमानगर्भसम्भूतः।
स्त्रीणामनादरकृतो विव्वोको नाम विज्ञेयः।।

यथा—

असम्मुखालोकनमाभिमुख्यं निषेध एवानुमतिप्रकारः।
प्रत्युत्तरं मुद्रणमेव वाचो नवाङ्गनानां नव एव पन्थाः।।
करचरणाङ्गन्यासः सभ्रूनेत्रौष्ठसंयुक्तः।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम्।।

यथा श्रीरुद्रचन्द्रदेवानाम्—

धम्मिल्ले कुसुमोत्करं श्रवणयोः प्रत्यग्रफुल्लाम्बुजं
भाले कुङ्कुमपत्रकं च सरसं कण्ठे च मल्लीस्रजः।
गात्रे पद्मपरागशोभि वसनं विन्यस्य मीनेक्षणा
चित्तं क्षोभयति स्मरस्य पुरतो यान्ती पताकेव नः।।
प्राप्तानामपि वचसां क्रियते यदभाषणं ह्रिया स्त्रीभिः।
व्याजात्स्वभावतो वाप्येतत्समुदाहृतं विहृतम्।।

यथा—

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम्।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः।।

अथ स्वाभाविकगुणाः—

शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः।।

तत्र—

रूपयौवनलावण्यैरुपभोगोपबृंहितैः।
अलङ्करणमङ्गानां शोभेति परिकीर्त्तितम्।।

रूपलावण्ययोर्लक्षणमन्यत्रोक्तम्—

**अङ्गान्यभूषितान्येव कङ्कणाद्यैर्विभूषणैः।**
**येन भूषितवद्भान्ति तद्रूपमिति कथ्यते।।**
**मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा।**
**प्रतिभाति यदङ्गेषु तल्लावण्यमिति श्रुतम्।।**

**काव्यप्रदीपादयस्तु**—अवयविनः संस्थानसौष्ठवं लावण्यमित्याहुः। यथा—

**तहा रमणवित्थरो जह ण माइ कंचीलदा**
**तहा सिहिणतुङ्गिमा जह ण एह दिट्ठी पअम्।**
**तहा णअणवड्ढिमा जह ण किंवि कण्णुप्पलं**
**तहा अ मुहमुज्जलं दुससिणी जहा पुण्णिमा[1]।।**

**विज्ञेया च तथा कान्तिः शोभैवापूर्वमन्मथा।**

यथा—

**मंजिट्ठीओट्ठमुद्दा घणघसणसुवण्णुज्जला अंगलच्छी**
**दिट्ठी बालिन्दुलेहाधवलिमजइणी कुन्तला कज्जलाहा।**
**इत्थं विण्णाणलेहा विहरइ हरिणीचंचलच्छीअ तीए**
**कंदप्पोजीअदप्पो जुअजणजअणे वद्धलक्खो विभादि[2]।।**

**कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते।**

यथा मम **शृङ्गारमञ्जर्याम्**—

**धावइ पुरओ पुरओ मुहजोह्णाए तुह पवाहो।**
**वअणावरणणिअंसणमज्झिममग्गप्पणालेण[3]।।**

---

१. तथास्ति नितम्बविस्तरो यथा न माति काञ्चीलता
तथा स्तनतुङ्गना यथा नैति दृष्टिः पदम्।
तथा नयनवृद्धिता यथा न किमपि कर्णोत्पलं
तथा च मुखमुज्ज्वलं द्विशशिकी यथा पूर्णिमा।।इति च्छाया।

२. माञ्जिष्ठी ओष्ठमुद्रा घनघर्षणसुवर्णोज्ज्वला अङ्गलक्ष्मी-
र्दृष्टिर्बालेन्दुलेखाधवलिमजयिनी कुन्तलाः कज्जलाभाः।
इत्थं विज्ञानलेखा विहरति हरिणीचञ्चलाक्ष्याश्च तस्याः
कन्दर्पो जीवदर्पो युवजनजयने बद्धलक्ष्यो विभाति।।इति च्छाया।

३. धावति पुरतः पुरतो मुखज्योत्स्नायास्तव प्रवाहः।
वदनावरणनिरसनमध्यममार्गप्रणालेन।।इति च्छाया।

सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च।
अनुल्वणत्वं चेष्टाया माधुर्यमिति संज्ञितम्।।

यथा—

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम्।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः।।

धैर्यं यथा—

चत्तरघरिणी पिअदंसणा अ तरुणी अ पडत्थपइआ अ।
असईसहरिआ दुग्गआ अ ण हु खण्डिअं सीलम्[१]।।

यथार्हप्रतिभानं प्रागल्भ्यम्। यथा—

वृथा परीहास इति प्रगल्भता न नेति च त्वादृशि वाग्विगर्हणा।
भवत्यवज्ञा च भवत्यनुत्तरादतः प्रदित्सुः प्रतिवाचमस्मि ते।।

स्थूललक्ष्यत्वमौदार्यम्। यथा—

प्रातर्वर्णनयानया निजवपुर्भूषाः प्रसादानदा-
द्देवी वः परितोषितेति निहितामान्तःपुरिक्या पुरः।
सूता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेशसरागलोचनरुचा दारिद्र्यविद्राविणीम्।।

श्रीमन्महीमहिततत्तदसीमधीम-
न्मूर्द्धन्यताकलनसङ्गतधन्यताकः।
लक्ष्मीधरोऽयमुदसूत मुदं प्रसूतां
विश्वेश्वरस्य कृतिरस्य चिरस्य लोके।।

।।इति श्रीपण्डितप्रकाण्डविश्वेश्वरपाण्डेयविरचिता
रसचन्द्रिका समाप्ता।।



१. चत्वरगृहिणी प्रियदर्शना च तरुणी च प्रोषितपतिका च।
असतीसहचरी दुर्गता च न खलु खण्डितं शीलम्।।इति च्छाया।

# प्रथमं परिशिष्टम्

# श्लोकार्द्धानुक्रमणिका





* (*)चिह्नाङ्कितश्लोका: 'रसचन्द्रिकाया:' मूल एव प्राकृतरूपेणोपनिबद्धा: सन्ति, येषां संस्कृतच्छाया तत्र तत्र टिप्पण्यामुल्लिखिताऽस्ति।

# द्वितीयं परिशिष्टम्

# ग्रन्थ-ग्रन्थकारनामानुक्रमणिका







# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "**वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "**सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)" इति सङ्केतेन विधेयः।



पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां**, श्रीमत्त्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया **'कलापचन्द्र'**टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया**, विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः — प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेका**भिधेन **भाषाभाष्येण** संवलितः प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः— प्रथमो भागः ४५०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **केदारखण्डः** : स्कन्दपुराणीयमाहेश्वरखण्डान्तर्गतकेदारखण्डस्य प्रकाशनं प्रो. वाचस्पतिद्विवेदिनो **हिन्दी-भाषानुवादेन** सह कृतमस्ति। पौराणिककथानकैः सत्कर्मणो भगवत आशुतोषस्य भक्तिभावनायाः सततं प्रेरणाप्रदाने पूर्णरूपेण सक्षमोऽयं ग्रन्थः। प्रो. द्विवेदिनो विस्तृतया भूमिकया सनाथितोऽयं प्रकाशितः— प्रथमो भागः ४६०.००

७. **सात्वतसंहिता** : वैष्णवतन्त्रस्य मूर्धन्यतमोऽयं ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजवल्लभद्विवेदिना सम्पादितस्य सभाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

८. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्म-विमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

९. **बौद्धदर्शन और मार्क्सवाद** (परिसंवाद-६) : विश्वविद्यालयस्यास्य श्रमणविद्यासङ्कायेन समायोजितायां सङ्गोष्ठ्यां विश्रुतैर्विद्वद्भिः पठितानां विशिष्टनिबन्धानां सङ्कलनं विहितम्। संस्कृत-हिन्दी-आङ्ग्ल-भाषामयान् निबन्धान् सङ्कलय्य डॉ. रमेशकुमारद्विवेदिना सम्पादितोऽयं ग्रन्थः प्रकाशितः— ३६०.००

१०. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथि-तया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

११. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१२. **तत्त्वबिन्दुः** : श्रीवाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिमाधारीकृत्य डॉ. रजनीशकुमारशुक्लेन सम्पादितः प्रकाशतामानीतः— १२०.००

१३. **शिवलीलार्णवः** : महाकविना श्रीनीलकण्ठदीक्षितेन प्रणीतं द्वाविंशसर्गात्मकं महाकाव्यमिदं भगवतः शिवस्य चतुष्षष्टिलीलानां लालित्यपूर्णं वर्णनं प्रस्तौति। सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सम्पादितमिदं महाकाव्यं प्रकाशितम्— २००.००

---

*पत्रव्यवहारसङ्केतः*— **निदेशकः**, प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२